चेति पञ्चविधबन्धाः। एतेषु शुद्धाध्ववासिनां मुक्तात्मनामिव निरतिशयं सुखमेव, दुःखस्पृष्टसुखदुःखमोहाश्च न सन्ति। अतो हेतोरयं 'शुद्धाध्वा' इत्यभिधीयते। मिश्राध्ववासिनां तु निरञ्जनान् विहाय साञ्जनानां स्वा(सा)वधिसर्वज्ञतायां सत्यामपि [१]सुखदुःखमोहाः सन्ति। अतोऽयं 'मिश्राध्वा' इत्यभिधीयते। अशुद्धाध्ववासिनां तु निरञ्जनान् विहाय साञ्जनानां केषाञ्चित् स्वा(सा)वधिसर्वज्ञतायां सत्यामप्यन्येषां किञ्चिज्ज्ञत्वं किञ्चित्कर्तृत्वं च सुखदुःखमोहाश्च सन्ति। अतो हेतोरयम् 'अशुद्धाध्वा' इत्यभिधीयते।

अत्र बैन्दवो मायीयश्चेति द्वौ पाशावागन्तुकौ, कार्मपाशस्तु प्रवाहानादिर्भोगनाश्यः। आणवपाशस्तु कूटस्थानादिः स्वपाकान्ते परमेश्वरप्रसादात्मिकया दीक्षया निवर्त्यः। कार्मपाशस्तु विज्ञानयोगसंन्यासैर्भोगेन वा क्षीयते। एते ज्ञानादयः शास्त्रद्वारात्[२] सम्पद्यन्ते।

---

इनमें से शुद्ध अध्वा के भुवनों में निवास करनेवाली आत्माओं में बैन्दव और रोधशक्ति नामक दो ही पाश रहते हैं। मिश्र अध्वा के भुवनों में रहनेवाले जीवों में इन दो पाशों से अतिरिक्त आणव और कार्म नामक दो पाश और होते हैं। इस तरह से ये चार पाशों से बँधे रहते हैं। अशुद्ध अध्वा के भुवनों में स्थित जीवों में इन चार के अतिरिक्त मायानामक पाश भी रहता है। इस तरह से इनमें पाँचों प्रकार के बन्धन विद्यमान रहते हैं। इनमें से शुद्ध अध्वा में निवास करनेवाले जीवों में मुक्त आत्मा की तरह सदा निरतिशय सुख की स्थिति रहती है। दुःख से स्पृष्ट सुख, दुःख और मोह इनमें नहीं रहते। इसीलिये इसको शुद्धाध्वा कहते हैं। मिश्राध्वा में रहनेवाले जीवों में [1]निरंजनों को छोड़कर बाकी के सांजन जीवों में सावधिक सर्वज्ञता के रहने पर भी सुख, दुःख और मोह की स्थिति रहती है। इसलिये इसे मिश्राध्वा कहते हैं। अशुद्ध अध्वा में रहनेवाले जीवों में निरंजनों को छोड़कर कुछ सांजनों में संकुचित ज्ञान और क्रियाशक्ति के साथ सुख, दुःख और मोह की भी स्थिति रहती है। इसीलिये इसे 'अशुद्धाध्वा' कहते हैं।

यहाँ बैन्दव और मायीय ये दो पाश आगन्तुक हैं। [2]कार्म पाश प्रवाहरूप से अनादि है, तो भी भोग से इसका नाश हो जाता है। आणव पाश अनादि होते हुए भी एक

---

१. 'सुख...ज्ञत्वं' नास्ति–ख.ग.। २. द्वारा-ख.।

1. पाशुपत मत में निरंजन और सांजन के भेद से पशु की दो अवस्थाएँ वर्णित हैं। निष्ठावस्थापन्न सिद्ध योगी ही निरंजन कहलाता है। "निरञ्जनः परमं साम्यमुपैति" (३.१.३) मुण्डकोपनिषद् के इस वचन में इसीकी चर्चा है।
2. कार्म पाश का यहाँ दो बार उल्लेख हुआ है। इसमें कुछ त्रुटि लगती है। तिरोधान व्यापार की यहाँ चर्चा नहीं है।

## पञ्चविधानि शास्त्राणि

तानि च शास्त्राणि पञ्चविधानि—लौकिकम्, वैदिकम्, आध्यात्मिकम्, अतिमार्गम्, मान्त्रं चेति। लौकिकं त्वायुर्वेददण्डनीत्यादिदृष्टफलं शास्त्रम्। वैदिकं च वेदेषु क्रियाभागमुद्दिश्य ज्योतिष्टोमादिपुण्यसम्पादितस्वर्गादिसाधकमीमांसाशास्त्रं च वेदविषय(या)पौरुषेयसाधकम्, पदार्थप्रमाणयोः परीक्षां कुर्वद्भी [१]ऋषिभिः प्रणीते न्यायवैशेषिके शास्त्रे च। एतत्त्रितयं दृष्टादृष्टफलं शास्त्रम्। आध्यात्मिकं तु सांख्य-पातञ्जल-वेदान्ताख्यान्युपनिषद्भागमुद्दिश्य ऋषिभिः प्रणीतान्यात्मज्ञानफलानि शास्त्राणि[२]। अतिमार्गं तु शास्त्रं रुद्रप्रणीतानि पाशुपतकापालमहाव्रतानि। मान्त्रं तु शिवप्रणीतसिद्धान्तशास्त्रम्।

---

जगह टिका रहता है। इसकी निवृत्ति उसकी परिपाकावस्था में परमेश्वर के अनुग्रह से प्राप्त दीक्षा के द्वारा होता है। कार्म पाश की निवृत्ति विज्ञान, योग, संन्यास अथवा भोग से होती है। ज्ञान आदि की प्राप्ति शास्त्रों के माध्यम से होती है।

ये शास्त्र [1]लौकिक, वैदिक, आध्यात्मिक, आतिमार्गिक और मान्त्र के भेद से पाँच प्रकार के हैं। आयुर्वेद, दण्डनीति आदि शास्त्र लौकिक हैं। इनके अध्ययन का लाभ तुरन्त दिखाई पड़ता है। वेदों के क्रियाभाग में निर्दिष्ट ज्योतिष्टोम आदि के अनुष्ठान से अर्जित पुण्य से स्वर्ग की प्राप्ति होती है, इसका निर्देश करने- वाला मीमांसाशास्त्र वेदविषयक पुरुषकार का साधक है। पदार्थों और प्रमाणों की परीक्षा करनेवाले ऋषियों ने न्याय और वैशेषिक शास्त्रों की रचना की है। ये तीनों शास्त्र दृष्ट और अदृष्ट फल की व्याख्या करते हैं। वेदों के उपनिषद् भाग के सहारे ऋषियों के द्वारा प्रणीत सांख्य, पातंजल योग और वेदान्तशास्त्रों की गणना आध्यात्मिक शास्त्र में होती है। इनका प्रयोजन

---

*१. 'ऋषिभिः' नास्ति-क.। २. 'शास्त्राणि' नास्ति-क.।*

1. उमापति शिवाचार्य ने शतरत्नसंग्रह (पृ. ८-९) में कामिकागम और सोमसिद्धान्त के वचनों को उद्धृत कर पंचविध शास्त्रों में से प्रत्येक के पाँच-पाँच भेदों का अर्थात् कुल २५ प्रकार के शास्त्रों का उल्लेख किया है और कहा है कि इनका वर्णन सर्वात्मशम्भुकृत सिद्धान्तदीपिका में देखा जा सकता है। हम देखते हैं कि इन सभी पचीस शास्त्रों का विवरण यहाँ नहीं दिया गया है और मीमांसा, न्याय और वैशेषिकशास्त्र का वैदिक एवं आध्यात्मिक भेदों में भी सांख्य, योग तथा वेदान्त के साथ समावेश किया है (पृ. २६ देखिये)। प्रस्तुत ग्रन्थ में हमें शास्त्रों के पाँच-पाँच भेदों की अपेक्षा तीन-तीन भेदों का ही विवरण मिलता है।

## मीमांसाशास्त्रम्

मीमांसाशास्त्रस्य वक्ता भगवान् जैमिनिः। अनेन शास्त्रेण तु प्रतिपाद्यमानोऽर्थः — [१]वाक्यलक्षणं च, वेदा अपौरुषेया इति च, प्रपञ्चो नित्य इति च[२]। इष्टापूर्तं कर्मानुष्ठेयमिति च कर्मानुष्ठानमेवानुष्ठातुः स्वर्गादिसाधनमिति च, भौतिकशरीरेन्द्रियेभ्योऽन्ये आत्मानः, एते चानेके, एतेभ्य आत्मभ्यो विलक्षण ईश्वरः कश्चिन्न भवति, इति च प्रतिपादितम्।

## वैशेषिकशास्त्रम्

वैशेषिकशास्त्रेण तु प्रतिपाद्यमानोऽर्थः—पृथिव्यप्तेजोवायव इति भूतानि चत्वार्यनित्यानि, एतेषां कारणानि तत्तन्नामानो भिन्नाः परमाणव इति च[३], एतेभ्योऽन्यच्छब्दकारणं नित्यं व्यापकं पञ्चममाकाशात्मकभूतमिति च। एतस्मादन्यो नित्यो काल ईश्वरश्च दिशश्च। एतेभ्यो भूतकारणशरीरेन्द्रियेभ्योऽन्येऽमूर्ता नित्या आत्मानोऽनेके। एतेभ्यो व्यतिरिक्तं नित्यं ज्ञानहेतुकं मन आत्मन्यात्मन्यभिधीयमानमनादि।

---

आत्मज्ञान कराना है। रुद्र के द्वारा प्रणीत पाशुपत, कापालिक और महाव्रत शास्त्रों की गणना अतिमार्ग में होती है। शिवप्रणीत सिद्धान्तशास्त्र मन्त्रशास्त्र कहलाता है।

मीमांसाशास्त्र के प्रवक्ता भगवान् जैमिनि हैं। इस शास्त्र के द्वारा प्रतिपादित प्रमुख विषय ये हैं—वाक्य का लक्षण, वेदों की अपौरुषेयता, प्रपञ्च की नित्यता, [1]इष्टापूर्त कर्मों का अनुष्ठान, ज्योतिष्टोम आदि कर्मों के अनुष्ठान की स्वर्गसाधनता, भौतिक शरीर-शरीर इत्यादि से भिन्न आत्मा की सत्ता, इनकी अनेकता और इन आत्माओं से विलक्षण ईश्वर की सत्ता का निषेध।

वैशेषिकशास्त्र के द्वारा प्रतिपादित विषयों का संक्षिप्त परिचय इस प्रकार है—पृथिवी, जल, तेज और वायु नामक चार भूत अनित्य हैं। इनकी उत्पत्ति उन्हीं नामों के परमाणुओं से होती है। इन चारों भूतों से भिन्न, शब्द का कारण आकाश नाम का पाँचवाँ भूत है। यह नित्य और व्यापक है। आकाश से भिन्न नित्य काल, ईश्वर और दिशाओं की

---

*१. वाक्यार्थ-ग.। २. च प्रतिपादितः-ख.। ३. 'च' नास्ति-क.।*

1. तत्त्वप्रकाश के टीकाकार कुमारदेव ने इष्ट और पूर्त के नाम से धर्म के दो भेद किये हैं। इनमें से इष्ट को वैदिक धर्म और पूर्त को तान्त्रिक धर्म बताया है (पृ. ३७)। अग्निहोत्र आदि वैदिक अनुष्ठानों का इष्ट धर्म में तथा वापी, कूप, तडाग आदि के निर्माण का पूर्त धर्म में समावेश किया जाता है। "अथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि" (२.७-२८) अमरकोश में भी यही कहा गया है।

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि। एतेभ्यो व्यतिरिक्तः शुक्लादिगुणपदार्थः, एतस्मादन्य उत्क्षेपणादिः [१]कर्मपदार्थः। अतोऽन्यो गोत्वादिः सामान्यपदार्थः। पटे शौक्ल्यमित्यादिः समवायपदार्थः। एतेभ्यो द्रव्यगुणकर्मसामान्यसमवायेभ्यः पञ्चभ्योऽन्यो विशेषपदार्थः। एतेषु षट्सु आत्मनः पदार्थतत्त्वस्य मनःसंयोगाद् ज्ञानमुत्पद्यते। अनेन पुण्यापुण्यात्मकं कर्मानुष्ठानमुत्पद्यते, [२]अनेन पापात् पापात्मकं कर्मानुष्ठानमुत्पद्यते, पुण्यात् पुण्यात्मकं कर्मानुष्ठानमुत्पद्यते। अनेन शरीरेन्द्रियाणि च। पुण्यापुण्यवशेन स्वर्गनरकप्राप्तिः। सर्वस्य निर्वाहक ईश्वरः। अस्य मनःसंयोगाद् ज्ञानोत्पत्तिः, न तु स्वतः[३] प्रसिद्धं ज्ञानम्। इत्थम्भूतेन शरीरिणां साधर्म्यवैधर्म्यज्ञानेन कर्मक्षयो भवति। मनःसंयोगजनितज्ञानं विना पाषाणकल्पो[४] भवति[५]। अयमेव मोक्ष इति च, वेदा ईश्वरकर्तृका इति च।

---

भी स्थिति अलग से है। इन भूतों से और इनसे उत्पन्न शरीर, इन्द्रिय इत्यादि से भिन्न अमूर्त, नित्य, अनेक आत्माओं की भी पृथक् स्थिति है। इनके अतिरिक्त नित्य, ज्ञान का कारण मन प्रत्येक आत्मा के साथ अनादिकाल से जुड़ा हुआ है। इस तरह से पृथिवी, जल, तेज, वायु, आकाश, काल, दिक्, आत्मा और मन ये नौ द्रव्य यहाँ माने गये हैं। इन द्रव्यों से भिन्न शुक्ल, पीत आदि रूप, रस आदि के रूप में विभक्त गुण पदार्थ भी यहाँ माना गया है। इन गुणों से पृथक् उत्क्षेपण आदि के रूप में विभक्त कर्म पदार्थ है। गोत्व आदि जातियों का बोधक सामान्य पदार्थ इनसे भिन्न है। पट आदि में शुक्लता आदि की स्थिति समवाय नामक एक पृथक् पदार्थ का बोध कराती है। इन द्रव्य, गुण, कर्म, सामान्य और समवाय नामक पाँच पदार्थों से भिन्न विशेष[1] नामक पदार्थ भी यहाँ माना गया है। [2]इन पदार्थों के मध्य आत्मा की विशेष स्थिति यह है कि इसके साथ मन का संयोग होने पर ज्ञाननामक गुण उत्पन्न होता है। इससे पुण्य और पाप के भेद से भिन्न कर्मों

---

*१. 'कर्म··· गुणकर्म' नास्ति–ख.। २. 'अनेन··· मुत्पद्यते' नास्ति–ख.ग.। ३. स्वप्रसिद्धं–क.। ४. ताकल्पं वर्तन्ते–क.। ५. वर्तते–ख.ग.।*

1. विशेष नामक अनितर साधारण पदार्थ को मानने के कारण ही यह दर्शन वैशेषिक के नाम से प्रसिद्ध हुआ है।
2. इन छः पदार्थों के अतिरिक्त आधुनिक वैशेषिक-दर्शन में अभाव नामक सातवाँ पदार्थ भी स्वीकृत है, किन्तु प्रशस्तपादभाष्य और उसकी टीकाओं में छः ही पदार्थ परिगणित हैं। इसी पद्धति से यहाँ भी अभाव का परिगणन नहीं किया गया।

## न्यायशास्त्रम्

न्यायशास्त्रेण तु प्रतिपाद्यमानोऽर्थः — प्रत्यक्षादिप्रमाणानि प्रमेयसिद्धार्थज्ञेयानि च वैशेषिकोक्तक्रमेणैव। पदार्था एते षोडशविधा इति च, मोक्षलक्षणं च [१]एतेषूक्तप्रकारमिति च, ईश्वरपदार्थः [२] प्रयोक्ता नित्य इति च। एतच्छास्त्रद्वयप्रणेतारौ कणादाक्षपादौ च।

---

में उसकी प्रवृत्ति होती है। बुरे कामों से पाप की और अच्छे कर्मों से पुण्य की उत्पत्ति होती है। इन्हींके अनुसार आत्मा को विभिन्न शरीरों और इन्द्रियों की प्राप्ति होती है। पुण्य और अपुण्य के कारण ही उसे स्वर्ग और नरक में जाना पड़ता है। इन सबका निर्वाहक, सभी आत्माओं को पुण्य अथवा पापकर्म में प्रवृत्त करानेवाला ईश्वर है। ईश्वर में भी ज्ञान की उत्पत्ति मन के संयोग से ही होती है। वेदान्त-दर्शन के समान यहाँ उसमें स्वतःप्रतिष्ठित ज्ञान नहीं माना जाता। यहाँ आत्माओं का कर्मक्षय पदार्थों के साधर्म्य-वैधर्म्य के ज्ञान से होता है। मन के संयोग से उत्पन्न ज्ञान के अभाव में यह आत्मा पाषाण के समान संज्ञाशून्य रहता है। इसीको यहाँ मोक्ष कहा गया है। साथ ही यह भी यहाँ बताया गया है कि वेद ईश्वर के द्वारा रचित है।

न्यायशास्त्र के द्वारा प्रतिपादित विषय इस प्रकार हैं — प्रत्यक्ष आदि प्रमाण और उनके द्वारा ज्ञात प्रमेय पदार्थों की स्थिति वैशेषिक[1] के समान ही है। प्रमेय पदार्थों की संख्या यहाँ सोलह है। [2]मोक्ष का लक्षण भी वैशेषिक सदृश ही है। इन्होंने भी ईश्वर को सबका प्रेरक और नित्य माना है। वैशेषिक और न्यायशास्त्र के प्रवक्ता क्रमशः [3]कणाद और अक्षपाद हैं।

---

*१. एतैरुक्त–ख.ग.। २. इतः परम् 'तत्त्वस्य च ज्ञानं चिकीर्षन्' इत्यधिकं–क.।*

1. वस्तुतः वैशेषिक-दर्शन में दो या तीन ही प्रमाण अभिप्रेत हैं, जब कि नैयायिक मत में चार प्रमाण हैं। प्रमेय पदार्थों का भेद तो स्वयं ग्रन्थकार ने भी बता दिया है। आगे चलकर न्याय-वैशेषिक का यह भेद मिटता गया। ग्रन्थकार उसी स्थिति को सूचित करते हैं।
2. मोक्ष का स्वरूप न्याय और वैशेषिक में ही नहीं, पाशुपतमत में भी दुःखान्त स्वरूप ही था। यहाँ मोक्ष की स्थिति पाषाण-कल्प है। इस आक्षेप को देखते हुए उक्त तीनों मतों में परिवर्तन हुआ। मोक्ष का यह परिवर्तित स्वरूप व्योमशिव की प्रशस्तपादभाष्यटीका व्योमवती में, भासर्वज्ञरचित गणकारिका (पाशुपतमत) और न्यायभूषण में देखा जा सकता है।
3. पुराणों में तथा अन्यत्र भी २८ योगाचार्यों की तथा उनके ११२ शिष्यों की नामावली मिलती है। इनमें कणाद और अक्षपाद के नाम भी हैं। "निगमागमीयं संस्कृतिदर्शनम्" में संगृहीत हमारा "पुराणवर्णिताः पाशुपता योगाचार्याः" शीर्षक निबन्ध देखिये।

## सांख्यशास्त्रम्

सांख्यशास्त्रेण प्रतिपाद्यमानोऽर्थ: —नित्या, व्यापिका, जडरूपा, समस्तवस्तूनां कारणम्, सत्त्वरजस्तमसां साम्यावस्था, अमूर्ता च प्रकृतिरियम्। प्रकृतिश्चतुर्विंशतितत्त्वमिति च। एतत्कार्यं बुद्धितत्त्वमारभ्य पृथ्वीतत्त्वान्तानि त्रयोविंशतितत्त्वानीति च। एवम्भूतचतुर्विंशतितत्त्वेभ्योऽन्ये नित्या व्यापका अमूर्ता नानाविधाः सर्वकृत्सर्वज्ञत्वरहिता ज्ञानमात्रस्वरूपा आत्मानः। एवं पञ्चविंशतितत्त्वमिति च। एतेषां मुक्तिदशायां संसारदशायां च निर्विशेषं स्वरूपेऽशुद्धिर्नास्तीति च। अनादिसिद्धाया बुद्धिगताया अविद्याया वशात् सांसारिकसुखदुःखज्ञानमुपपद्यत[१] इति च। प्रकृतिपुरुषविवेकज्ञानादविद्याया विनाशो मोक्ष इति च। आत्मभ्यो व्यतिरिक्त ईश्वर इति न कश्चिदिति च। एतच्छास्त्रप्रणेता कपिलः।

---

सांख्यशास्त्र के द्वारा प्रतिपादित विषय ये हैं—नित्या, व्यापिका, जडरूपा, समस्त जागतिक वस्तुओं को उत्पन्न करनेवाली, सत्त्व, रज और तम नामक तीन गुणों की साम्यावस्था को यहाँ प्रकृति के नाम से जाना जाता है। बुद्धितत्त्व से लेकर पृथिवीतत्त्व पर्यन्त तेईस तत्त्व इस प्रकृति के ही कार्य हैं। इन चौबीस तत्त्वों से भिन्न नित्य, व्यापक, अमूर्त स्वभाव, नाना प्रकार के सर्वज्ञत्व, सर्वकर्तृत्व आदि गुणों से रहित, ज्ञानमात्रस्वरूप आत्मा की भी सत्ता यहाँ मानी गई है। इस प्रकार इनके मत में पचीस तत्त्व मान्य हैं। मुक्तिदशा अथवा संसारदशा में इनकी स्थिति में कोई अन्तर नहीं माना गया है। इनके स्वरूप में किसी प्रकार की अशुद्धि भी नहीं मानी गई है। अनादिकाल से चली आ रही बुद्धिगत अविद्या के कारण इसमें संसार के सुख-दुःख का ज्ञान उत्पन्न होता है। प्रकृति और पुरुष में परस्पर विवेकज्ञान के उत्पन्न होने पर [1]अविद्या की निवृत्ति ही यहाँ मोक्ष कहलाता है। इन आत्माओं से भिन्न ईश्वर की यहाँ कोई [2]सत्ता नहीं मानी गई है। इस शास्त्र के प्रणेता महर्षि कपिल हैं।

---

१. *मुत्पद्यत-ख.।*

1. सांख्यदर्शन में अविद्या के स्थान पर अविवेक शब्द प्रयुक्त है। "धर्मो ज्ञानं विवेक ऐश्वर्यम्। सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्।।" (का. २३) यहाँ सांख्यकारिका में अविवेक पद गृहीत है।

2. ईश्वर की सत्ता का निषेध ईश्वरकृष्ण की सांख्यकारिका की परम्परा में ही है। महापुराण, पुराण आदि में वर्णित तथा विज्ञानभिक्षु द्वारा व्याख्यात सांख्य ईश्वर की सत्ता को स्वीकार करता है।

## पातञ्जलशास्त्रम्

पातञ्जलशास्त्रेण तु प्रतिपाद्यमानोऽर्थ इत्थम्— प्रकृतिप्राकृते चात्मानश्च बन्धमोक्षौ च[१], विवेकज्ञानवद् योगश्च, योगपरिकर इति च। षड्विंशतितत्त्वमीश्वर एकः[२]। अस्यात्मभ्यो विशेषः। स्वाधिष्ठानता निर्मा(र्वा)णं चेत्याख्यावत्। केवलवस्तुस्वरूपंसाधारणं चात्मज्ञानोपदेष्टृत्वं चेति। एतच्छास्त्रप्रणेता पतञ्जलिः।

## चतुर्विधा वेदान्तिनः

वेदान्तवादिनस्तु चतुर्विधाः — भास्करीयाः, मायावादिनः, शब्दब्रह्मवादिनः, [३]क्रीडाब्रह्मवादिनश्चेति। एतेषु भास्करीयाणां शास्त्रप्रतिपाद्यमानोऽर्थः — जडाजडात्मकसुरनरतिर्यगादिको वस्तुराशिरखिलो [४]लोको ब्रह्मणः परिणामः। एतद् ब्रह्म सच्चिदानन्दात्मकं नित्यं व्यापकं च। एतदेवेश्वरो भवति। अस्य

---

पातंजल योगशास्त्र का प्रतिपाद्य विषय यह है—प्रकृति और प्रकृति-जन्य विकारों के साथ आत्मा का सम्पर्क और उसका विच्छेद ही यहाँ बन्ध और मोक्ष के नाम से अभिप्रेत है। प्रकृति और पुरुष का विवेक-ज्ञान कराने में ही योगशास्त्र और उसके यम-नियम आदि अंगों का उपयोग माना गया है। यहाँ छब्बीसवाँ तत्त्व ईश्वर एक ही है। यह सामान्य आत्माओं से भिन्न इसलिये है कि यह स्वतन्त्र है और इस जगत् का निर्माण यही करता है। कैवल्य का, वस्तुओं के सामान्य स्वरूप का और आत्मज्ञान का भी उपदेश यही करता है। इस शास्त्र के प्रणेता महर्षि पतंजलि हैं।

वेदान्तवादी चार प्रकार के हैं — भास्करीय, मायावादी, शब्दब्रह्मवादी और क्रीडाब्रह्मवादी। इनमें से भास्कराचार्य के द्वारा व्याख्यात वेदान्तशास्त्र में बताया गया है कि यह चराचरात्मक, देव, मनुष्य, पशु, पक्षीस्वरूप तथा समस्त पदार्थ-स्वरूप यह सारा जगत् ब्रह्म का परिणाम है। यह ब्रह्म सत्, चित्, आनन्दस्वरूप, नित्य और व्यापक है। यह ब्रह्म ही ईश्वर बन जाता है। इसके वास्तविक स्वरूप को न समझ पाने के कारण ही ब्रह्म के विकार के रूप में यह जगत् परिणत हो जाता है। विकारों की पृथक् सत्ता न होने के कारण यह ब्रह्म ही एकमात्र परमार्थ सत्य है। वेदान्त के ज्ञान से शरीर से

---

*१. स्व(स्त)रिति—क.ग.। २. एकैकस्यात्मभ्यो—क.। ३. कोट—क.। ४. 'लोको' नास्ति—ख.ग.।*

विकारत्वस्याज्ञानात् परिवर्तते संसारोऽयम्। एक एव परमार्थतः सत्यम्, अस्य विकाराणां च विकारत्वात्। वेदान्तज्ञानेन च शरीरव्यतिरिक्तमात्म[१]स्वरूपं भासते। तत्तत् परब्रह्मैवेति वेदनेन[२] तल्लयो मोक्ष इति च प्रतिपादयन्ति।

मायावादिनस्तु पूर्वोक्तं परब्रह्मैव परमार्थतः सत्यम्, दृश्योऽन्योऽखिलांशोऽसत्यः, शुक्तिकायां रजतवत्। जगदुपादानं मायेयं ब्रह्मवत् सत्या च न भवति, [३]शशविषाणवदसत्या च न भवति। मायाया विलक्षणं ब्रह्मस्वरूपम्, वेदान्तज्ञानेन स्वयमिति वेदनं मोक्ष इति प्रतिपादयन्ति।

---

भिन्न आत्मस्वरूप की प्रतीति होती है। यह सब कुछ परब्रह्म ही है, इस प्रकार के ज्ञान का उदय होने पर प्रपंच का विलय हो जाना ही वास्तव में मोक्ष है। भास्करीय वेदान्त में ये ही विषय प्रतिपादित हैं।

मायावादी वेदान्तियों के अनुसार ऊपर बताया गया परब्रह्म ही परमार्थतः सत्य है। उससे भिन्न जो कुछ भी दिखाई पड़ता है, वह सब उसी तरह से असत्य है, जैसे कि शुक्ति (सीप) में रजत की प्रतीति। जगत् की उपादानभूत माया ब्रह्म के समान सत्य भी नहीं है और न शशविषाण (खरगोश के सींग) के समान असत्य ही है। इस माया से विलक्षण ब्रह्म का स्वरूप वेदान्त के ज्ञान से इस रूप में अनुभूत होता है कि मैं स्वयं ब्रह्म हूँ। इनके मत में यही मोक्ष है।

[1]शब्दब्रह्मवादी के मत में सबका कारणस्वरूप परब्रह्म प्रमेय (संसार) दशा में शब्दात्मक बन जाता है। जड़ और अजड़स्वरूप यह समस्त वस्तु जगत् इसीका विकार है, इसीलिये नाशवान् है। केवल शब्दात्मक परब्रह्म ही वस्तुतः अविनाशी है। शास्त्र की सहायता से अपने इस स्वरूप को जान लेना ही वास्तव में मोक्ष है। शब्दब्रह्मवादी इसीका प्रतिपादन करते हैं।

---

*१. मात्मज्ञानस्व–ख.। २. वेदने–ख.ग.। ३. 'शश··· भवति' नास्ति–क.।*

1. ब्रह्मसूत्र में शब्दब्रह्मवाद और क्रीडाब्रह्मवाद का प्रतिपादक कोई भाष्य अथवा व्याख्या आज हमें उपलब्ध नहीं है। इनमें शब्दब्रह्मवाद का प्रतिपादन भर्तृहरि ने वाक्यपदीय में तथा क्रीडाब्रह्मवाद का प्रत्यभिज्ञादर्शन में मिलता है। संभव है, ग्रन्थकार के सामने ऐसा कोई भाष्य या व्याख्या रही हो।

शब्दब्रह्मवादिनस्तु कारणं [१]परं ब्रह्म प्रमेयदशायां [२]शब्दब्रह्मात्मकं भवति। अस्य विकारो जडाजडात्मकं समस्तवस्तु विनाशि, अविनाशि वस्तुतः शब्दात्मैव तदेवं स्वरूपं भवतीति [३]च वेदनं मोक्ष इति च प्रतिपादयन्ति।

[४]क्रीडाब्रह्मवादिनस्तु पूर्वोक्तं ब्रह्मैवाहम्, अहमेकाकी न भवामि, अहमेवोच्चावचैर्विकारवस्तुभिः सह बहुधा क्रीडामीत्यभिसन्धिना ब्रह्म भवति बहु। तद्वस्तु नित्यं वस्तु स्वयमित्युपलब्धिर्मोक्ष इति च प्रतिपादयन्ति। एतेषां चतुर्णां मतानां प्रणेता व्यासः।

## आस्तिकनास्तिकशास्त्राणि

मीमांसक-वैशेषिक-न्याय-सांख्य-पातञ्जल-वेदान्ता इति षट् शास्त्राणि [५]वैदिकानि। एतेषु वेदान्त एवाद्वैतशास्त्रम्। इतराणि पञ्च भेदशास्त्राणि। एतत्षट्कं विना वेदबाह्यानि नास्तिकशास्त्राणि।

---

क्रीडाब्रह्मवादी के मत में पूर्वोक्त परब्रह्म ही अहंशब्द का वाच्य है। मैं अकेला नहीं रहूँगा, मैं ही नाना प्रकार की वस्तुओं की रचना कर उनके साथ क्रीडा करूँगा। इस अभिप्राय से ब्रह्म ही नाना प्रकार की वस्तुओं की रचना कर उनके साथ क्रीडा करता है। ये नाना प्रकार की क्रीडा के निमित्त निर्मित वस्तुएँ और वह अहंनामक नित्य वस्तु— ये सब वास्तव में स्वयं परब्रह्म ही हैं, ऐसा इनका कहना है। इस क्रीडासिद्धान्त को समझ लेना ही इनके यहाँ मोक्ष है। वेदान्त के इन चारों सिद्धान्तों के मूल प्रवक्ता महर्षि वेदव्यास हैं।

शास्त्रों के वैदिक विभाग के अन्तर्गत [1]मीमांसक, वैशेषिक, नैयायिक, कापिल सांख्य, पातंजल योग और वेदान्त का समावेश किया जाता है। इनमें केवल वेदान्त ही अद्वैत सिद्धान्त का प्रतिपादक है। अन्य पाँच शास्त्र भेद(द्वैत)वाद के पोषक हैं। इन छः शास्त्रों के अतिरिक्त वेद-बाह्य नास्तिकशास्त्र भी लोक में प्रचलित हैं।

---

*१. ब्रह्म परं—क.। २. शब्दात्मकं—क.ग.। ३. 'च' नास्ति—क.ग.। ४. कोट—क.।*
*५. 'वैदि··· शास्त्राणि' नास्ति—ख.।*

1. पहले मीमांसा, वैशेषिक और न्यायदर्शन का वैदिक विभाग में तथा सांख्य, योग और वेदान्त का आध्यात्मिक विभाग में परिगणन किया गया है और यहाँ इन सभी को वैदिक विभाग के अन्तर्गत माना है। इसका अभिप्राय यही लगता है कि ये छः आस्तिक दर्शन हैं, क्योंकि आगे यहीं लोकायत, बौद्ध और जैन नामक तीन दर्शनों की नास्तिक विभाग में गणना की गई है।

## लोकायतशास्त्रम्

[१]तानि शास्त्राणि कानीति चेत्, बौद्धमार्हतं लोकायतिकं चेति त्रीणि। एतेषु त्रिषु लोकायतिकशास्त्रेण तु प्रतिपाद्यमानोऽर्थः — प्रत्यक्षमात्रं प्रमाणम्। प्रत्यक्षाः पृथिव्यप्तेजोवायवः सत्याः। एतेषां समुदायशरीरमेव आत्मा। देहवृद्ध्या ज्ञानवृद्धिः स्यात्, देहे क्षीणे ज्ञानं क्षीणं स्यादिति च। ईश्वर इति न कश्चित्। दृष्टे सुखदुःखे एव स्वर्गनरकौ। शरीरे नष्टेऽनष्टव्यं किमप्यदृष्टं नास्ति। अत एव शरीरं विनाऽऽत्मेति कश्चिदन्यो न भोक्तेति। लोकायतिकशास्त्रप्रणेता बृहस्पतिः।

## बौद्धशास्त्रम्

बौद्धे तु प्रतिपाद्यमानोऽर्थः — पृथिवीतत्त्वमारभ्य बुद्धितत्त्वान्तत्रयोविंशतितत्त्वानि सन्ति। एतेषु बुद्धितत्त्वं प्रधानम्। पाञ्चभौतिके शरीरे बुद्धितत्त्वमेवात्मा भवति।

---

वे शास्त्र कौन-कौन से हैं? वे हैं — बौद्ध, आर्हत (जैन) और लोकायतिक (चार्वाक) नामक तीन शास्त्र। इन तीनों में लोकायतिकशास्त्र का कहना है कि केवल एक प्रत्यक्ष ही प्रमाण है। पृथिवी, जल, तेज और वायु नामक चार पदार्थ ही सबको प्रत्यक्ष प्रतीत होते हैं, अतः केवल ये ही सत्य हैं। इन चारों पदार्थों का समुदायस्वरूप यह स्थूल शरीर ही आत्मा है। देह की वृद्धि के साथ ज्ञान में भी वृद्धि होती है और देह के क्षीण होने के साथ ज्ञान भी क्षीण होता जाता है। ईश्वर नाम की कोई वस्तु नहीं है। इस संसार में प्रतीत हो रहे सुख-दुःख ही वास्तव में स्वर्ग और नरक हैं। शरीर के नाश के साथ ही सब कुछ नष्ट हो जाता है। अदृष्ट नाम की भी कोई वस्तु यहाँ मान्य नहीं है। इसलिये शरीर के अतिरिक्त अन्य कोई आत्मा भोक्ता के रूप में यहाँ स्वीकार्य नहीं है। इस लोकायतशास्त्र के प्रणेता आचार्य बृहस्पति हैं।

बौद्धों ने अपने सिद्धान्त का प्रतिपादन इस तरह से किया है — पृथिवी से लेकर [1]बुद्धि पर्यन्त तेईस तत्त्व है। इनमें बुद्धितत्त्व प्रधान है। इस पांचभौतिक शरीर में बुद्धितत्त्व

---

१. *'तानि शास्त्राणि' नास्ति–क.।*

1. विज्ञानवादी बौद्धों के विज्ञान को बुद्धिगत धर्म मानकर यह विवरण दिया गया है। वस्तुतः बौद्धों ने और जैनों ने भी कहीं भी सांख्यसंमत तत्त्वों की प्रक्रिया को स्वीकार नहीं किया है। ग्रन्थकार का यह विवरण शैवागमों की उस प्रक्रिया का अनुसरण करता है, जहाँ बौद्ध दर्शन की पहुँच बुद्धितत्त्व तक तथा आर्हत दर्शन की पहुँच गुणतत्त्व तक मानी गई है। स्वच्छन्दतन्त्र (११.६८) देखिये।

तदेव प्रधानम्। एतद् बुद्धितत्त्वमारभ्यार्वाग् वस्तुराशिरखिलः क्षणिकः। अन्यथा स्थिर आत्मा च ईश्वरश्च—इत्येतदुभयं नास्ति। एतच्छास्त्रोपदेष्टा सुगत एव। उपास्यमोक्षस्तु जलप्रवाहवन्नित्यानुभूयमानज्ञानसन्ततिः। दुःखसुखस्पर्शं विना शुद्धचित्सन्ततिरेव स्यादिति केचित्। [१]क्रमात् क्रमात् प्रवर्तमानो दीपः क्षीणयोस्तैलवर्त्योर्यथा नश्यति, [२]तथा ज्ञानसन्ततिनाश एव मोक्ष इति केचित्। एते सौत्रान्तिक-वैभाषिक-महायानिक-माध्यमिका इति चतुर्विधा भवन्ति। एतेषु केचित् प्रत्यक्षोऽखिलो वस्तुराशिरसत्यः, ज्ञानसन्ततिरेव सत्येति। केचिदयमखिलो वस्तुराशिरस्ति, अपितु क्षणिक इति च।

---

ही आत्मा है। यही प्रधान भी है। इस बुद्धितत्त्व से प्रारंभ कर नीचे की सभी वस्तुएँ क्षणिक हैं। इससे भिन्न स्थिर आत्मा अथवा ईश्वर की कोई स्थिति नहीं है। इस शास्त्र के उपदेष्टा सुगत (बुद्ध) हैं। उपास्य (प्राप्तव्य) मोक्ष की स्थिति जल के प्रवाह के समान सतत अनुभूयमान ज्ञानसन्तति ही है। अन्य आचार्यों का कहना है कि सुख-दुःख आदि के स्पर्श से रहित शुद्ध चित्सन्तति ही मोक्ष (निर्वाण) है। दीपक की लौ एक के बाद दूसरी निरन्तर जलती रहती है, किन्तु तैल और बत्ती के क्षीण हो जाने पर जैसे दीपक बुझ जाता है, उसी तरह से ज्ञान की सन्तति का नाश ही अन्य आचार्यों के मत से मोक्ष है। बौद्ध सौत्रान्तिक, वैभाषिक, [1]महायानिक और माध्यमिक के भेद से चार प्रकार के हैं। इनमें से कुछ विद्वानों का मत है कि प्रत्यक्ष प्रतीत हो रही समस्त वस्तुराशि असत्य है। केवल ज्ञानसन्तति ही सत्य है, ऐसा अन्य कुछ आचार्यों का विचार है। अन्य कुछ विद्वान् कहते हैं कि समस्त वस्तुराशि की स्थिति क्षणिक है।

---

१. *'क्रमात्' नास्ति—ग., आत्मा—ख.। २. तद्वत्—ख.ग.।*

1. ब्रह्मसूत्रभाष्य (१.४.२५) में भास्कर ने भी मायावादी महायानिक बौद्ध का उल्लेख किया है, किन्तु बौद्धों के चार भेदों में तृतीय स्थान पर सर्वत्र विज्ञानवादी योगाचारों का ही उल्लेख मिलता है। बौद्धों के इन चारों प्रस्थानों के संक्षिप्त परिचय के लिये सायणमाधव के सर्वदर्शनसंग्रह का बौद्ध दर्शन प्रकरण देखिये—"ते च माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्व-बाह्यार्थशून्यत्व-बाह्यार्थानुमेयत्व-बाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते" (पृ.७)। प्रस्तुत ग्रन्थ में दिया गया विवरण अधूरा है।

## आर्हतशास्त्रम्

अथार्हतैस्तु प्रतिपाद्यमानोऽर्थः — आर्हतशास्त्रप्रणेताऽर्हन्नत्रानादिसिद्धः। जीव इति कोऽपि पदार्थोऽनादिदोषसहितो वर्तते। अयं जीवः स्थूलदेहे क्षीणे क्षीणो वृद्धे वृद्ध इति च। अन्यानीन्द्रियाण्यपि सन्ति च। एतत्सर्वं नाम हिंसाऽहिंसेति वा अस्ति नास्ति काय इति शब्देन वक्तव्यम्। आर्हदुक्तशास्त्रोक्तज्ञानेन चैतच्छास्त्रोक्ततप्तशिलाशयनादितपोभिश्च जीवानां हिंसादयो दोषाः क्षीयन्ते। एवमर्हन्निव क्षीणदोषो भवेदिति च। एतानि शास्त्राणि, एते पदार्थाः सन्ति न सन्ति वेति पृच्छ्यमाने — अस्ति [१]च, नास्ति च, अस्ति नास्तीति च त्रिविधेन उच्यते[२] इति च। एतत्त्रयं[३] वेदबाह्यम्। ईश्वर इत्येकोऽनादिगतो न इति च। ते आचाररहिता नास्तिका उच्यन्ते।

---

[1]आर्हतों (जैनों) का कहना है कि आर्हतशास्त्र के प्रणेता अर्हन्त अनादिसिद्ध हैं। जीव नाम का पदार्थ अनादिकाल से चले आ रहे दोषों से घिरा हुआ है। यह जीव स्थूल देह के क्षीण होने पर स्वयं क्षीण हो जाता है और उसके बढ़ने पर स्वयं भी बढ़ता रहता है। इससे भिन्न इन्द्रियों की भी स्थिति है। यह सब कुछ हिंसा, अहिंसा अथवा अस्तिकाय, नास्तिकाय आदि शब्दों से कहा जाता है। आर्हतशास्त्र के अनुसार ज्ञान से तथा इस शास्त्र में वर्णित तपती हुई शिला पर शयन जैसे कठोर तप के अनुष्ठान से जीवों के हिंसा आदि दोष क्षीण हो जाते हैं। इस तरह से सारे दोषों के क्षीण हो जाने पर जीव अर्हत् के समान हो जाता है। आपके इन शास्त्रों की और उनके द्वारा उपदिष्ट पदार्थों की स्थिति कैसी है? ऐसा पूछने पर वे ये सब हैं, नहीं हैं और होते हुए भी नहीं हैं, इस तरह से त्रिविध[2] रूप में उनका वर्णन करते हैं। लोकायतिक, बौद्ध और जैन — ये तीनों मत वेदबाह्य माने गये हैं। इनमें से कोई ईश्वर को नहीं मानता। आचार से रहित होने के कारण इनको [3]नास्तिक कहा जाता है।

---

*१. 'च' नास्ति–क.। २. उच्यन्ते–क.। ३. 'एतत्… उच्यन्ते' नास्ति–ख.।*

1. जैनमत के विशिष्ट एवं संक्षिप्त परिचय के लिये भी उपर्युक्त ग्रन्थ का जैन दर्शन प्रकरण देखिये (पृ.२५-३३, आनन्दाश्रम, पूना संस्करण)।
2. यहाँ के त्रिभंगीनय के स्थान पर उक्त ग्रन्थ में सप्तभंगीनय प्रतिपादित है (पृ.३३-३४)।
3. नास्तिकता के प्रयोजक तीन तत्त्वों का यहाँ उल्लेख किया गया है — १. वेदानङ्गीकर्तृत्व, २. ईश्वरानङ्गीकर्तृत्व और ३. आचाररहितत्व। नास्तिकता के ये तीनों लक्षण लोकायत, बौद्ध और जैन दर्शन में विद्यमान हैं। आचारपद से वैदिक आचार गृहीत होगा। पाणिनि (४.४.६०) की परिभाषा के अनुसार तो नास्तिक विभाग में केवल लोकायत (चार्वाक) का ही समावेश होगा।

## वैदिकशास्त्राणि षट्

वैदिकशास्त्राणि षट्। तेषामुत्पत्तिभूर् ऋग्यजुःसामाथर्वाण इति वेदाश्चत्वारः। [१]एतेषामङ्गानि छन्दोविचिति-कल्प-शिक्षा-व्याकरण-निरुक्त-ज्योतींषीति षट्। मन्त्ररूपेण ब्राह्मणरूपेण, विधिदोषे(रूपे)ण च ब्राह्मणादिवर्णधर्माणां ब्रह्मचर्याद्या[२]श्रमधर्माणां प्रतिपादनं च, उपनिषद्भागैः प्रकृतिपुरुषेश्वरप्रतिपादनं च वेदानां[३] प्रमेयार्थाः। एवं वेदसिद्धाचारस्य [४]प्रवर्तकाः, शौचादिव्यवहारस्य प्रायश्चित्तस्य च नियामका मन्वादिधर्मशास्त्राण्यष्टादश। एतेषां प्रणेतारो मन्वादयो [५]महर्षयः।

## पाञ्चरात्रशास्त्रम्

वासुदेवप्रणीतपाञ्चरात्रेण तु[६] प्रतिपाद्यमानोऽर्थः—प्रोक्तचतुर्विंशतितत्त्वगुण-तत्त्वोपरि पञ्चविंशतितत्त्वं[७] वासुदेव इत्याख्यम्। न किमपि परतत्त्वमेतस्मात्

---

ऊपर बताये गये मीमांसा, वैशेषिक, न्याय, सांख्य, पातंजल योग और वेदान्त नामक छः शास्त्र वेदानुवर्ती हैं। इनकी उत्पत्ति ऋक्, यजुः, साम और अथर्व नामक चार वेदों से हुई हैं। वेदों के छन्दोविचिति, कल्प, शिक्षा, व्याकरण, निरुक्त और ज्यौतिष नामक छः अंग हैं। मन्त्र, ब्राह्मण और विधि के रूप में वेदों में ब्राह्मण आदि चार वर्णों के धर्मों का और ब्रह्मचर्य आदि चार आश्रमों का प्रतिपादन हुआ है। वेदों के उपनिषद्-भाग प्रकृति, पुरुष और ईश्वर का प्रतिपादन करते हैं। वेदों में मुख्य रूप से इन्हीं प्रमेयों का प्रतिपादन किया गया है। वेदों के द्वारा संक्षेप में प्रतिपादित आचारों का, आशौच आदि व्यवहारों का और प्रायश्चित्त आदि कर्मों का नियमन मनु आदि के द्वारा रचित [1]अठारह स्मृतियों में विस्तार से किया गया है। इनके रचयिता मनु, याज्ञवल्क्य आदि अठारह महर्षि हैं।

वासुदेव द्वारा प्रणीत पांचरात्रशास्त्र का प्रतिपाद्य विषय इस प्रकार है — ऊपर बताये गये चौबीसवें गुणतत्त्व के ऊपर पचीसवाँ तत्त्व वासुदेव के नाम से वर्णित परतत्त्व

---

*१. तेषां–क.। २. श्रमाणां–ख.ग.। ३. 'वेदानां' नास्ति–क.। ४. प्रतिपत्तिका–ग.। ५. ऋषयः–क.। ६. 'तु' नास्ति–ग.। ७. 'तत्त्वम्' नास्ति–क.।*

1. परिशिष्ट में प्रकाशित प्रस्थानभेद (पृ.४८-५०) में स्मृतियों, पुराणों और उपपुराणों के नाम देखे जा सकते हैं।

परतत्त्वात्। कृष्ण-अनिरुद्ध-मकरध्वज-रौहिणेया इति चत्वारो व्यूहा जगत्सृष्ट्यर्थ-मुत्पद्यन्ते। एतैश्चतुर्भिर्जडाजडात्मकं वस्तु समस्तं सृज्यत इति च। वेदान्तेषु परिणामवादिभिरुक्तवदखिलं वासुदेव इति च। वेदेषु पुरुषार्थो नास्ति, पाञ्चरात्रेषु पुरुषार्थाः सन्ति। अतः पाञ्चरात्रोक्तक्रमेण दीक्षयित्वा वासुदेवं समाराध्य वासुदेवस्वरूपे लयो मोक्ष इति च।

## इतिहासपुराणानि

इतिहासपुराणैस्तु प्रतिपाद्यमानोऽर्थः — वैदिकधर्माणां च सांख्यपातञ्जलप्रतिपाद्यार्थानां च पाञ्चरात्रपाशुपतशैवोक्तार्थानां[१] च सृष्टिसंहारयोश्च वंशानां च मन्वन्तराणां च वंशानुचरितानां च प्रतिपादनं च। इतिहासो महाभारतम्। पुराणान्यष्टादश। एतेषां कर्ता वेदव्यासः। पञ्चविंशतितत्त्वमात्मेति पदार्थः। दीक्षया मुक्तो भवतीति च पुराणानां प्रमेयार्थाः।

---

है। इस परतत्त्व से [1]कृष्ण, अनिरुद्ध, मकरध्वज (प्रद्युम्न) और रौहिणेय (बलभद्र) नाम के चार व्यूह जगत् की सृष्टि के लिये उत्पन्न होते हैं। इन चार व्यूहों से स्थावर-जंगमात्मक यह सारा जगत् उत्पन्न होता है। परतत्त्व वासुदेव का स्वरूप वेदान्त में परिणामवादियों के द्वारा बताये गये ब्रह्म के जैसा है। [2]वेदों में कोई पुरुषार्थ नहीं है। इन पुरुषार्थों का प्रतिपादन पांचरात्रशास्त्र में किया गया है। अतः पांचरात्रशास्त्र में वर्णित पद्धति से दीक्षा लेकर वासुदेव की आराधना कर साधक का वासुदेव के स्वरूप में लीन हो जाना ही इनके यहाँ मोक्ष है।

महाभारत आदि इतिहास के ग्रन्थों में और पुराणों में प्रतिपादित विषय ये हैं — वैदिक धर्मों का, सांख्य और योग के द्वारा प्रतिपादित विषयों का, पांचरात्र, पाशुपत और शैवशास्त्रों में वर्णित सृष्टिसंहार-प्रक्रिया का वंशों, मन्वन्तरों और वंशानुचरित[3] का निरूपण इनमें किया गया है। इतिहास में महाभारत का और पुराण में अठारह पुराणों

---

*१. शैवोक्तानां–क.।*

1. पांचरात्र संहिताओं में वासुदेव, संकर्षण, प्रद्युम्न और अनिरुद्ध–ये नाम इसी क्रम से दिये गये हैं। तत्त्वों का परिगणन भी वहाँ भिन्न पद्धति से दिया गया है। अहिर्बुध्न्यसंहिता ५-७ अध्याय देखिये।
2. ब्रह्मसूत्रशांकरभाष्य (२.२.४५) से तुलना कीजिये।
3. "पुराणं पञ्चलक्षणम्" का विवरण देते समय पुराणों में बताया गया है कि यहाँ सर्ग, प्रतिसर्ग, वंश, मन्वन्तर और वंशानुचरित का विशेष रूप से प्रतिपादन किया जाता है। वंशानुचरित का विवरण देते हुए श्रीमद्भागवत (१२.७.१६) में बताया गया है कि पुराण प्रतिपादित वंशों में उत्पन्न हुए वंशधरों का विशिष्ट विवरण जिस भाग में होता है, उसे वंशानुचरित कहते हैं।

## अतिमार्गत्रये पाशुपतशास्त्रम्

अतिमार्गत्रयमुच्यते। [ तत्र ] पाशुपतशास्त्रेण तु[१] प्रतिपाद्यमानोऽर्थः — आत्मानो बहवो व्यापका नित्याः[२] कार्यकारणसंयोग[३]जातास्तु परस्परभिन्नाश्च। एतेषामाणवमलं नास्ति। मायामलेन कार्मपाशेन च सांसारिकाः सुखदुःखान्यनुभवन्ति। वैराग्योत्पत्तौ शास्त्रोक्तक्रमेण दीक्षिते परमेश्वरस्य ज्ञानगुणः संक्रान्तो भवति। पुत्रेषु कुटुम्बधुरं निधाय संन्यासवन्त इव आत्मसु ज्ञानं संक्रमय्य[४] ईश्वरः स्वाधिकारादुपरतो भवति।

---

का समावेश किया जाता है। इन सबके रचयिता वेदव्यास हैं। इनके मत में पचीसवाँ तत्त्व आत्मा नामक[1] पदार्थ है। दीक्षा के द्वारा वह मुक्त हो जाता है, यही पुराणों का मुख्य विषय है।

अब [2]अतिमार्ग के तीन विभागों का स्वरूप बताया जा रहा है। इनमें से पाशुपतशास्त्र का प्रतिपाद्य यह है — आत्मा असंख्य है। वे व्यापक और नित्य हैं। कार्य और कारण के संयोग के कारण इनमें परस्पर भिन्नता रहती है। आणवमल की इनके यहाँ सत्ता नहीं है। मायामल और कार्ममल से बद्ध होने से सांसारिक जीव सुख और दुःख का अनुभव करते हैं। वैराग्य के उत्पन्न होने पर शास्त्रों में वर्णित क्रम से दीक्षित होने पर जीवात्मा में परमेश्वर के ज्ञान-गुण की संक्रान्ति होती है। पुत्रों के ऊपर कुटुम्ब के भरण-पोषण के भार को डालकर संन्यास ग्रहण करनेवाले व्यक्ति में अपने ज्ञान-गुण को संक्रान्त कर परमेश्वर उसके प्रति अपने [3]अधिकार को समाप्त कर देता है।

---

*१. 'तु' नास्ति–ख.ग.। २. 'नित्याः' नास्ति–क.। ३. जात्मज्ञानात्–ख., जातात्मज्ञानात्–ग.। ४. संक्रम्य–क.ख.।*

1. इतिहास-पुराण में आत्मा के अतिरिक्त ईश्वर भी प्रतिपादित है।
2. अतिमार्ग विभाग में यहाँ शैवों के चार विभागों में से सिद्धान्तशैव को छोड़ कर अन्य तीन शैव मतों का परिगणन किया गया है। इसकी परीक्षा अपेक्षित है। इन चारों मतों के मोक्षविषयक (शिवसाम्य) विचारों की समीक्षा शैवपरिभाषा (पृ.१५६-१६०) में देखी जा सकती है।
3. अष्टप्रकरण में प्रकाशित परमोक्षनिरासकारिका की टीका में उद्धृत अवधूत सिद्ध के वचन से इसकी तुलना की जा सकती है। जैसे कि–"यथाह व्यासाक्षिण्यां तत्रभवानवधूतः– परमशिवः सिद्धान् प्रत्युपरताधिकारोऽप्यन्येष्वनुपरताधिकारः। सिद्धः पुनरेकान्तेन सर्वत एवोपरताधिकार इति भेदः" (पृ.२८१)।

## महाव्रतशास्त्रम्

महाव्रतानां तु प्रतिपाद्यमानोऽर्थः — आणवमलेन सह पाशुपतोक्तप्रकारेणैव कार्ममायात्मकबन्धमुक्तानामात्मनां संसारदशायामपि ज्ञानशक्तिरेव, न[१] क्रियाशक्तिः। शास्त्रोक्तक्रमेण दीक्षिता अस्थिधारणादिशास्त्रोक्तचर्यानुष्ठातारो मुक्ता भवन्ति। ते च मुक्ताः केवलं[२] ज्ञानशक्तिमन्त एव। ज्ञानशक्तिक्रियाशक्तिद्वयं तु परमेश्वरस्यैकस्यैवेति।

## कापालिकशास्त्रम्

[३]कापालिकानां तु प्रतिपाद्यमानोऽर्थः — पाशुपतमहाव्रतोक्तक्रमेण आत्मलक्षणं बन्धलक्षणं चास्ति। शास्त्रोक्तक्रमेण दीक्षितेन दिने दिने श्यामैकध्वजपताकायां व्याप्तायां मनुष्यकपाल(ले) भिक्षामटित्वा भोक्तव्यमिति च, महाव्रतानामिव मोक्ष

---

[1]महाव्रत-सम्प्रदाय का सिद्धान्त इस प्रकार है—आणव मल के साथ पाशुपत मत द्वारा प्रतिपादित क्रम से ही कार्म और मायीय नामक बन्धनों से मुक्त जीवात्माओं की संसारदशा में भी ज्ञानशक्ति ही रहती है, क्रियाशक्ति नहीं। शास्त्रोक्त विधि से दीक्षा प्राप्त कर ये अपने शास्त्र में उपदिष्ट अस्थिधारण आदि चर्याओं का अनुष्ठान करते हुए मुक्त हो जाते हैं। ये मुक्त जीव भी केवल ज्ञानशक्ति से सम्पन्न होते हैं। ज्ञानशक्ति और क्रियाशक्ति — इन दोनों शक्तियों से सम्पन्न तो केवल एक ईश्वर ही है।

कापालिक-सम्प्रदाय का प्रतिपाद्य विषय यह है — आत्मा का स्वरूप और बन्ध का क्रम यहाँ पाशुपत और महाव्रत के अनुसार ही है। शास्त्रोक्त क्रम के अनुसार इन्हें प्रतिदिन काले वस्त्र से बनी ध्वज-पताका को हाथ में लेकर मनुष्य के कपाल का भिक्षापात्र बनाकर उसमें भिक्षा माँगकर भोजन करना चाहिये। मोक्ष की स्थिति इनके यहाँ [2]महाव्रतों के समान ही है। पाशुपत, महाव्रत और कापालिकों के शास्त्रों के प्रवक्ता मायातत्त्व और विद्यातत्त्व में निवास करनेवाले तीन रुद्र हैं।

---

*१. 'न' नास्ति—क.। २. 'केवलं' नास्ति—क.। ३. कापालानां—ग.।*

1. यहाँ महाव्रत शब्द का प्रयोग कालामुख सम्प्रदाय के लिये किया गया है। शैवपरिभाषा (पृ.१५६) और शिवमहापुराण (७.२.३१.७३) में भी यह शब्द इसी अर्थ में प्रयुक्त है, किन्तु जैन हरिभद्र सूरि के षड्दर्शनसमुच्चय की गुणरत्नकृत तर्करहस्यदीपिकाटीका (पृ. ५१) में महाव्रत का प्रयोग कापालिक के लिये किया गया है तथा कालामुख का वहाँ अलग से उल्लेख है।
2. शैवपरिभाषा (पृ.१५६) के अनुसार महाव्रती के मत में शिवसाम्य की उत्पत्ति होती है और कापालिक का मानना है कि मुक्त आत्मा में शिवसाम्य का समावेश होता है।

इति च। पाशुपत-महाव्रत-कापालानां शास्त्राणामतिमार्गाणां वक्तारो मायातत्त्वविद्यातत्त्ववासिनस्त्रयो रुद्राः।

### सिद्धान्तशास्त्राणि

अदृष्टशास्त्रभूतसिद्धान्तशास्त्रस्य इह लोके विश्वासजनकं परमेश्वरेण तत्पुरुषाघोरवामदेवसद्योजातनामभिश्चतुर्भिरधोवक्त्रैरनुगृहीतैर्विज्ञानकेवलैरेतदेव तत्संज्ञैश्चतुर्भिरुक्तानि गारुड-दक्षिण-वाम-भूतानीत्यधःस्रोतांसि चत्वारि शास्त्राणि। एतेषां गारुडतन्त्रेण तत्पुरुषं ब्रह्म स्वरूपवद् ध्यात्वा पूजनीयमित्युच्यते। अनेन शास्त्रेण तु प्रत्यक्षं सर्पचिकित्सार्थं मन्त्रौषधविषयाणि चोक्तानि। दक्षिणतन्त्रेषु अघोरं ब्रह्म स्वरूपवद् ध्यात्वा पूजनीयः परमेश्वर इति च, योगेन परमेश्वरः प्रत्यक्षीकार्य इति चोक्तम्। शत्रुजयाय मन्त्रयोगश्च। वामतन्त्रेण वामदेवो ब्रह्मस्वरूपवद् ध्यात्वा पूजनीयः। अनेन शास्त्रेण रसवादाद्युक्तम्[१]। भूततन्त्रेण सद्योजातं ब्रह्मस्वरूपवद् ध्यात्वा परमेश्वरः पूजनीय इत्युक्तम्। भूत-प्रेत-पिशाच-चिकित्सार्थं मन्त्रौषधानि च।

---

अदृष्ट (पारलौकिक धर्म) का प्रधानतः प्रतिपादन सिद्धान्तशास्त्र में विश्वास जगाने के लिये परमेश्वर ने अपने [1]तत्पुरुष, अघोर, वामदेव और सद्योजात नामक चार नीचे के मुखों से अनुगृहीत विज्ञानाकल स्थितिवाले चार रुद्रों के द्वारा क्रमशः अधःस्रोतवाले गारुड़, दक्षिण, वाम और भूत तन्त्रों का उपदेश कराया है। इनमें से गारुडतन्त्र में तत्पुरुष को ही ब्रह्म मानकर उसका ध्यान और पूजन किया जाता है। इस शास्त्र में सर्प आदि के विष की चिकित्सा के लिये प्रत्यक्ष प्रभाववाले मन्त्रों और औषधियों का उपदेश किया गया है। दक्षिण तन्त्र के अनुसार अघोरस्वरूप को ही मानकर उसका ध्यान और पूजन किया जाता है। यहाँ बताया गया है कि योग के द्वारा परमेश्वर का साक्षात्कार करना चाहिये। शत्रुओं पर विजय प्राप्त करने के लिये यहाँ मन्त्र उपदिष्ट हैं। वामतन्त्र के अनुसार वामदेवस्वरूप को ही ब्रह्म मानकर परमेश्वर के रूप में उसका ध्यान और पूजन किया जाता है। इस शास्त्र में रसवाद आदि उपदिष्ट हैं। भूततन्त्र के अनुसार सद्योजातस्वरूप को ही ब्रह्म मानकर परमेश्वर का ध्यान और पूजन किया जाता है। यहाँ भूत, प्रेत, पिशाच आदि की चिकित्सा के लिये मन्त्र और औषधियाँ उपदिष्ट हैं।

---

१. द्युक्तः –क.ग.।

1. यहाँ पंचमन्त्रतनु पंचमुख भगवान् शिव के पाँच मुखों से निःसृत पंचस्रोतस् शास्त्रों का विवरण दिया गया है। शिव के ऊर्ध्व मुख से निःसृत शास्त्र ऊर्ध्वस्रोतस् तथा नीचे के चार मुखों से निःसृत शास्त्र अधःस्रोतस् कहे गये हैं। कश्मीरी शैवागम ग्रन्थों में इन पाँचों से भिन्न षष्ठ स्रोतस् को अधःशासन अथवा पिचुवक्त्र नाम दिया गया है।

शक्तितत्त्ववासिना केनचिदात्मना शाक्तं तन्त्रमुक्तम्। भास्करीयवेदान्तवादिप्रोक्त-वज्जडाजडमखिलं शक्तिपरिणति[१]रित्युक्ततन्त्रस्याभिमतम्। तान्यधःस्रोतांसि चत्वारि च साक्षात् शिवप्रणीतानि भवन्ति। कौल[२]यामलादिशास्त्राणि मनुष्यैर्मत्स्येन्द्र-नाथादिसिद्धैरुक्तानि।

## शास्त्रतारतम्यम्

लोकायतज्ञानिनां पृथिव्यप्तेजोवायूनां चतुर्णां भूतानां ज्ञानेन तत्तदर्वाक्-प्रपञ्चजननं विरमति। आर्हतानां [३]गुणतत्त्वादर्वाक्तत्त्वाज्जन्म विरमति। [४]न्यायवैशेषिक-योर्बुद्धितत्त्वान्तसंसारो विरमति। बौद्धानां बुद्धितत्त्वादर्वाक्तत्त्वाज्जन्म विरमति। सांख्यानां प्रकृतिपुरुषयोर्विवेकज्ञानेन सत्य(त्त्व)प्रकृतेरुपरि मिश्राध्वविषयस्य तत्त्वज्ञानस्या-संभवादशेषकर्मनाशानुत्पत्तेर्विज्ञानकैवल्यं नास्ति। पाञ्चरात्राणां प्रकृतेरर्वाक् संसारो विरमति। वेदान्तिनां पुरुषतत्त्वप्राप्तिः स्यात्। पौराणिकानां रागतत्त्वप्राप्तिः

---

शक्तितत्त्व में निवास करनेवाली किसी विशेष आत्मा ने शाक्त तन्त्र का उपदेश किया है। भास्करीय वेदान्त में बताई गई पद्धति के अनुसार यहाँ भी सारा जड़चेतनात्मक जगत् शक्ति का परिणाम है। पंच मन्त्र तनु ईश्वर के नीचे के चार मुखों से उपदिष्ट होने से ऊपर के चारों मत अधःस्रोत के नाम से प्रसिद्ध हैं। ये सब शास्त्र साक्षात् शिव के द्वारा ही प्रणीत हैं। कौल, यामल आदि शास्त्र मत्स्येन्द्रनाथ[1] आदि महापुरुषों के द्वारा उपदिष्ट हैं।

लोकायतशास्त्र को जाननेवालों को पृथिवी, जल, तेज और वायु नामक चार भूतों के ज्ञान से इनसे पहले के प्रपंच (भुवनों) से मुक्ति मिल जाती है। [2]आर्हतों (जैनों) का गुणतत्त्व से नीचे के तत्त्वों (भुवनों) में जन्म नहीं होता। नैयायिकों और वैशेषिकों को बुद्धितत्त्व पर्यन्त संसार से मुक्ति मिल जाती है। बौद्धों को बुद्धितत्त्व

---

*१. णीतरीत्योक्त–ख.। २. 'यामल' नास्ति–ख.ग.। ३. गुणत्वा–क., गुणतत्त्वानां–ख.।*
*४. 'न्याय···जन्म विरमति' नास्ति–ग.।*

1. कौल शास्त्र के प्रवर्तक मत्स्येन्द्रनाथ हैं, यह बात तो अभिनवगुप्त, अघोरशिव आदि के वचनों से भी सिद्ध हो जाती है, किन्तु यामलशास्त्र के प्रवर्तक किसी महापुरुष के विषय में हमें अब तक कोई सूचना नहीं मिली है।
2. यह पूरा विवरण शैवागमों की दृष्टि से किया गया है। स्वच्छन्दतन्त्र (११.६८-७४) तथा अन्यत्र भी विभिन्न मतों की मोक्षविषयक स्थिति का अपनी पद्धति से इसी तरह निरूपण किया गया है।

स्यात्। [१]कापालिकानां कलातत्त्वप्राप्तिः स्यात्। पाशुपतानां मायातत्त्वप्राप्तिः स्यात्। महाव्रतिनां[२] विद्यातत्त्वप्राप्तिः स्यात्। स्रोतोऽन्तरगारुड-दक्षिण-वाम-भूततन्त्रेषु [३]दीक्षितानां शक्तितत्त्वस्थितनिवृत्ति-प्रतिष्ठा-विद्या-[४]शान्तिभुवनप्राप्तिः स्यात्। शुद्धशाक्तानां शक्तितत्त्वप्राप्तिः स्यात्। कौलयामलादिशास्त्राणां हिंसामैथुनसङ्गमस्य संभवात् पिशाचादिपदप्राप्तिः स्यात्।

### द्विविधं सिद्धान्तशास्त्रम्

सिद्धान्तशास्त्रं तु शिवभेदेन [५]रुद्रभेदेन च द्विविधम्। शिवभेदं तु [६]बिन्दु-शक्तेर्नादबिन्दुप्रणवात्मतया परिणमते। तदनन्तरं मातृका चानुष्टुब्छन्दोनिबद्धप्रणवादीनां

---

के नीचे के संसार में जन्म नहीं लेना पड़ता। सांख्यों को प्रकृति और पुरुष का विवेकज्ञान हो जाने पर भी, उनके यहाँ प्रकृति के ऊपर स्थित राग आदि मिश्राध्वा के तत्त्वों की कोई स्थिति न होने से सर्वात्मना तत्त्वों का ज्ञान नहीं हो पाता, समस्त कर्मों का नाश नहीं हो पाता। अतः वे विज्ञानकेवली[1] के पद को नहीं प्राप्त कर सकते। पांचरात्रों को प्रकृति के नीचे के तत्त्वों से छुटकारा मिल जाता है। वेदान्तियों को पुरुषतत्त्व की प्राप्ति होती है। पौराणिकों को रागतत्त्व की प्राप्ति होती है। कापालिकों को कलातत्त्व की, पाशुपतों को मायातत्त्व की और महाव्रतों को विद्यातत्त्व की प्राप्ति होती है। शास्त्रों के मान्त्रिक विभाग के अन्तर्गत आनेवाले गारुड़, दक्षिण, वाम और भूततन्त्रनामक विभिन्न स्रोतों में दीक्षित व्यक्तियों को शक्तितत्त्व में स्थित [2]निवृत्ति, प्रतिष्ठा, विद्या और शान्तिनामक भुवनों की प्राप्ति होती है। शुद्ध शाक्तमत का अनुसरण करने वालों को शक्तितत्त्वस्थित भुवनों की तथा कौल, यामल आदि शास्त्रों के अध्येताओं की हिंसा, मैथुन आदि में प्रवृत्ति रहने से वे पिशाच आदि योनियों में जन्म लेते हैं।

सिद्धान्तशास्त्र [3]शिवभेद और रुद्रभेद से दो प्रकार का है। शिवभेद बिन्दुशक्ति से नाद, बिन्दु और प्रणव के रूप में परिणत होता है। इसके बाद मातृका, अनुष्टुप्

---

*१. कापालानां–ख.ग.। २. व्रतानां–ख.ग.। ३. 'दीक्षितानां' नास्ति–क.। ४. शक्ति–क.ख.। ५. 'रुद्रभेदेन' नास्ति–क.। ६. बीज–ग.।*

1. केवली शब्द का प्रयोग जैनशास्त्रों में भी मिलता है।
2. पृष्ठ १५ की तीसरी टिप्पणी तथा प्रस्तावना (पृ. xx) देखिये।
3. सिद्धान्तशैवागमों के अन्तर्गत दस शिवभेदों का, अठारह रुद्रभेदों का तथा उनके प्रवक्ता प्रणव आदि का, विजय आदि का तथा उनके शिष्यों का विवरण देने वाले किरणागम के वचनों का संग्रह लुप्तागम० (भा.१, पृ.१७–१९) में किया गया है। अब किरणागम का विद्यापाद रोमन लिपि में छप गया है। ये सभी वचन वहाँ दसवें तन्त्रावतार पटल में देखे जा सकते हैं।

मायोक्तविधौ विज्ञानकलाख्यानां परमेश्वरेणानुगृहीतानां [१]दशशिवानां कामिकादिकं ज्ञानं शब्दात्मकं सद्योजातवामदेवमुखाभ्यां प्रोक्तानि शैवानि शास्त्राणि दश च[२]। एवं परमेश्वरोपदिष्टज्ञानानामष्टादशरुद्राणामघोरतत्पुरुषेशानमुखैः श्रीविजयादिसंज्ञया प्रोक्तानि रुद्रभेदादष्टा[३]दशशास्त्राणि च। एवमष्टाविंशतिशास्त्राणामेकैककोटिसंख्ययाऽ-ष्टाविंशतिकोटिग्रन्थाः। एतेषामष्टाविंशतिशास्त्राणां सिद्धान्त इति नाम।

**ज्ञानपादविषयाः**

एतानि प्रत्येकं ज्ञान-क्रिया-योग-चर्याभिश्चतुष्पादानि। एतेषां ज्ञानपादेन तु परमेश्वरस्य[४] स्वरूपं च, विज्ञानाकल-प्रलयाकल-सकलानामात्मनां स्वरूपं च, आणव-कार्म-माया-बैन्दव-रोधशक्त्यात्मकपाशस्वरूपं च, शक्तिस्वरूपं च, शिवतत्त्वमारभ्य पृथ्वीतत्त्वान्तषट्त्रिंशत्तत्त्वानां सृष्टिप्रकारश्च, एतैरात्मनां भोग-[५]साधनैर्भवितव्यं च, भुवनानां भुवनेश्वराणां स्वरूपं च[६], भुवनानां योजनान्ये[७]तावन्ति

---

छन्द आदि के रूप में निबद्ध होकर मायापद में विज्ञानाकल के रूप में स्थित प्रणव आदि दस शिवों को कामिक आदि दस आगमों के रूप में सद्योजात और वामदेव मुख से उपदिष्ट दस शैवागमों का शब्दात्मक ज्ञान प्राप्त होता है। इसी तरह से परमेश्वर के द्वारा उपदिष्ट विजय आदि संज्ञा (नाम) वाले अठारह रुद्रों को अघोर, तत्पुरुष और ईशान मुख से निर्गत विजय आदि अठारह शास्त्रों का उपदेश प्राप्त होता है। इन अट्ठाईस आगमों में से प्रत्येक एक करोड़ श्लोकप्रमाण का है। इस तरह से इन सब आगमों का आकार अट्ठाईस करोड़ श्लोकप्रमाण हैं। इन अट्ठाईस आगमों की [1]सिद्धान्तशास्त्र के रूप में प्रसिद्धि है।

इन सिद्धान्त नामवाले सभी आगमों में ज्ञान, योग, क्रिया और चर्यानामक चार पाद होते हैं। इनमें से ज्ञानपाद में परमेश्वर के स्वरूप का, विज्ञानाकल, प्रलयाकल और सकलनामक आत्माओं (पशुओं) के स्वरूप का; आणव, कार्म, माया, बैन्दव और रोधशक्तिनामक पाँच पाशों का, भक्ति के स्वरूप का; तथा शिवतत्त्व से

---

*१. 'दशशिवानां' नास्ति–ख.। २. 'च' नास्ति–क.। ३. दानीत्यष्टा–क.। ४. श्वरस्वरूपं–ख, श्वरस्य रूपं–ग.। ५. साधकैः–क.। ६. इतः परं 'परमेश्वराणामुमामहेश्वरादिव्यक्तलिङ्गलक्षणं च स्कन्दनन्द्याद्यारभ्य' इत्यधिकः पाठोऽत्रानावश्यकः। सोऽयं चर्यापादेऽवलोकनीयः। ७. 'एता··· णानि च' नास्ति–क.।*

1. अघोर शिवाचार्य की यह उक्ति इस विषय में अवधेय है– "सिद्धान्तशब्दः पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः"(अ० प्र०, पृ.१४९)।

परिमाणानि च, [१]अधःप्रलय-मध्यप्रलय-महाप्रलयानां स्वरूपं च, तत्प्रलयानन्तरं सृष्टेः प्रकारश्च, पाशुपत-महाव्रत-कापालशास्त्रवचनं च, तत्त्वं च, प्रोक्तार्थं पूर्वपक्षी[२]कृत्य प्रमेयनियमश्च प्रोच्यन्ते।

**क्रियापादविषयाः**

क्रियापादेन तु मन्त्रोद्धार-सन्ध्यावन्दन-पूजन-जप-होमाश्च, समयविशेष-निर्वाणसंस्कार-आचार्याभिषेका[३]त्मनाऽऽत्मनां भोगमोक्षोपायभूता दीक्षा च प्रोच्यन्ते।

**योगपादविषयाः**

योगपादेन त्वेतानि षट्त्रिंशत्तत्त्वानि च, तत्त्वेश्वराश्च, आत्मा च, परमेश्वरश्च, शक्तिश्च, जगत्कारणभूतमायामहामाययोः प्रत्यक्ष[४]प्रभावश्च, विषयतत्त्वसिद्ध्य-

---

लेकर पृथ्वीतत्त्व पर्यन्त छत्तीस तत्त्वों की सृष्टि के प्रकार का वर्णन मिलता है। यहाँ यह भी बताया गया है कि ये सभी आत्माओं के भोगों के साधन हैं। भुवनों और भुवनेश्वरों का स्वरूप भी यहाँ बताया गया है। किस भुवन का प्रमाण कितने योजन का है, यह भी यहाँ वर्णित है। अधःप्रलय, मध्यमप्रलय और महाप्रलय का स्वरूप और उन-उन प्रलयों के बाद होनेवाली सृष्टि का प्रकार भी यहाँ बताया गया है। [1]पाशुपत, महाव्रत और कापालिक शास्त्रों में प्रतिपादित तत्त्वों का स्वरूप भी प्रसंगवश पूर्वपक्ष के रूप में उपस्थापित है। इसके साथ ही प्रमेय पदार्थ का नियमन भी यहाँ किया गया है।

क्रियापाद में मन्त्रोद्धार, सन्ध्यावन्दन, पूजन, जप और होम का स्वरूप प्रदर्शित है। नाना प्रकार के समयों (नियमों) का, निर्वाण आदि संस्कारों (दीक्षाओं) का, आचार्य आदि के अभिषेकों का भी वर्णन यहाँ किया गया है। साथ ही यहाँ भोग और मोक्ष के उपाय के रूप में विविध दीक्षाओं का भी वर्णन किया गया है।

योगपाद में ऊपर बताये गये छत्तीस तत्त्वों का, इन तत्त्वों के अधिपतियों का, आत्मा, परमेश्वर और शक्ति का, जगत् की कारणभूत माया और महामाया के प्रत्यक्ष

---

*१. 'अधः' नास्ति–ख.ग.। २. पूर्ववत् कृत्वा–ख., वक्तृत्व–ग.। ३. काश्चात्मनां–क.। ४. 'प्र' नास्ति–ख.।*

1. शैवागमों के चार भेद प्रसिद्ध हैं। यहाँ सिद्धान्तशैवागम के अतिरिक्त तीन भेदों को अतिमार्ग बताया गया है। लगता है, सिद्धान्तशैवागमों के मत में ये ही तीन मत उनके प्रधान प्रतिद्वन्द्वी हैं। "प्रायश्च सिद्धान्तप्रियो लोकः सिद्धान्तक्रममाश्रितः" (स्वच्छन्दो० २.२५) क्षेमराज की इस उक्ति से भी सिद्धान्तशास्त्र की लोकप्रियता सिद्ध होती है। वामनपुराण (६.८६-९१) में इन चारों मतों को चार वर्णों से जोड़कर सभी मतों को मान्यता दी गई है।

पेक्षाणामणिमादिसिद्धीनां संभवश्च, प्राणायाम-प्रत्याहार-[१]ध्यान-धारणा-जप-समाधि-प्रकारश्च, मूला[२]धाराद्याधाराणामवस्थानं च प्रोच्यन्ते।

**चर्यापादविषयाः**

चर्यापादेन तु प्रायश्चित्त-पवित्रारोपणप्रतिपादनं च, शिवलिङ्गलक्षणं च, उमामहेश्वरादि[३]व्यक्तलिङ्गलक्षणं च, स्कन्दनन्द्यादिगणेश्वरलक्षणं च, जपमाला-योगपट्ट-दण्ड-कमण्डल्वादिलक्षणं च, अन्त्येष्टिश्राद्धानि च प्रोच्यन्ते।

---

प्रभाव का, सूक्ष्म विषयों और तत्त्वों के साक्षात्कार के लिये अपेक्षित अणिमा आदि सिद्धियों का, [1]प्राणायाम, प्रत्याहार, ध्यान, धारणा, जप और समाधि के प्रकारों का तथा मूलाधार आदि आधारों की शरीर में स्थिति का भी विवरण दिया गया है।

चर्यापाद में प्रायश्चित्तों का और [2]पवित्रारोपण-विधि का, शिवलिंग के लक्षणों का, उमा-महेश्वर आदि के व्यक्त लिंग के लक्षणों का, स्कन्द, नन्दी, गणेश्वर आदि के लक्षणों का, जपमाला, योगपट्ट, दण्ड, कमण्डलु आदि के लक्षणों का और अन्त्येष्टि श्राद्ध आदि का वर्णन किया गया है।

---

*१. धारणाध्यान – ख.ग.। २. धारध्यानादुद्धारणमनुरवस्था – क.। ३. व्यक्ताव्यक्त – क.।*

1. योग के छः अंगों का ही यहाँ निरूपण किया गया है। यहाँ ऊह या तर्क को छोड़कर उसके स्थान पर जप का समावेश किया गया है। पाशुपत-मत में जप को क्रियालक्षण योग का एक अंग माना गया है। पाशुपत-सूत्रकार (पृ.२१.२३) का कहना है कि मन्त्र के पाठ से और ॐकार में ध्यान और धारणा को स्थिर करने पर साधक योगी निष्ठायोग की सहायता से रुद्र के सायुज्य को प्राप्त करता है। योगसूत्रकार (१.२७-२८) भी प्रणव-जप की महिमा को गाते हैं। जप की योगांगता वैष्णव और शैव आगमों में भी वर्णित है। जयाख्यसंहिता (३३.११) के योगाख्यान पटल में और मृगेन्द्रागम के योगपाद (श्लो. ३) में इसको देखा जा सकता है। वाचिक, उपांशु और मानस नामक विविध जप का तो निरूपण सर्वत्र मिलता है, किन्तु लक्ष्मीतन्त्र (३९.३५) में जप का ध्यानात्मक चौथा प्रकार भी दिखाया गया है। सात्वतसंहिता के भाष्य (पृ.८५, ११५) में भी यह विषय देखा जा सकता है। ऐसा लगता है कि जप की योगांगता का सर्वप्रथम निरूपण पाशुपत-मत में किया गया। पाशुपत व्रत के शिवपुराण वायवीयसंहिता (१.३२.३) में क्रिया, तप, जप, ध्यान और दाननामक पाँच अंग वर्णित हैं। वीरशैव आगमों में और सिद्धान्तशिखामणि (९.२२-२४) में शिवपंचयज्ञ के रूप में इनका वर्णन है। ध्यान देने की बात है कि यहाँ भी जप का समावेश किया गया है।
2. पवित्रारोपण का विधान शैवागमों में ही नहीं, वैष्णवागम और शाक्तागमों में भी मिलता है। कर्मकाण्डक्रमावलि के लेखक सोमशम्भु का कहना है– "सर्वपूजाविधिच्छिद्रपूरणाय पवित्रकम्" (पृ. ४१)। वैष्णवाचार्य वल्लभ के अनुयायी श्रावण शुक्ल एकादशी के दिन आज भी भगवान् को पवित्रार्पण करते हैं।

**विविधपदप्राप्तिः**

समयसंस्कारेण तु [१]रुद्रपदप्राप्तिः स्यात्। विशेषसंस्कारेण तु ईश्वरपदप्राप्तिः स्यात्। अत्र रुद्रपदप्राप्तिर्नाम गुणमस्तकस्थरुद्रस्य पदप्राप्तिरेव। ईश्वरपदप्राप्तिर्नाम प्रकृतितत्त्वादुपरि मिश्राध्वनि प्रथमतत्त्वभूतरागतत्त्वप्राप्तिरेव। ईश्वरे[२]णानन्तेश्वरेणाधिष्ठितत्वात् तत्तत्त्वप्राप्तिरीश्वरपदप्राप्तिः स्यात्। सांख्य-पातञ्जल-वेदान्त-पाञ्चरात्रोक्तमार्गादुपरि निर्वाणदीक्षया परमेश्वरसाम्यरूपं मोक्षं प्राप्नुवन्ति।

**विविधा दीक्षाः**

अथ निर्वाणदीक्षाक्रिया[३] सद्योनिर्वाणाऽसद्योनिर्वाणभेदेन द्विविधा। तत्र सद्योनिर्वाणदीक्षाक्रियायाः समनन्तरकालमेव शरीरं विहाय मोक्षं प्राप्नुवन्ति। असद्योनिर्वाणदीक्षया दीक्षाकाले भूतानि भविष्यन्ति च[४] कर्माणि संशोध्य तदानीं भुज्यमानस्य शरीरहेतुभूतस्य वर्तमानकर्मणः शुद्धिकरणादायुःक्षये शरीरत्यागेन

---

समय संस्कार (सामान्य दीक्षा) से रुद्रपद की और विशेष संस्कार से ईश्वरपद की प्राप्ति होती है। यही रुद्रपद की प्राप्ति का अर्थ [1]गुणों के मस्तक पर स्थित रुद्र के पद की प्राप्ति से है और ईश्वरपद की प्राप्ति का अर्थ है प्रकृतितत्त्व से ऊपर मिश्राध्वा में विद्यमान प्रथम तत्त्व राग में स्थित भुवनों की प्राप्ति। ईश्वर, अर्थात् अनन्तेश्वर के द्वारा अधिष्ठित होने से उस तत्त्व की प्राप्ति ही ईश्वरपद की प्राप्ति कही जाती है। सांख्य, पातंजल, वेदान्त और पांचरात्र-आगम में उपदिष्ट मार्ग के ऊपर निर्वाण-दीक्षा में दीक्षित व्यक्ति को परमेश्वर की [2]समतारूप मोक्ष की प्राप्ति होती है।

---

*१. 'रुद्र ... तु' नास्ति–ग.। २. राधिष्ठिततत्त्वात्मकत्वप्राप्ति–ख., ईश्वरेणाधिष्ठितत्वात्–ग.। ३. 'क्रिया' नास्ति–क.ख.। ४. 'च' नास्ति–ख.ग.।*

1. गुणमस्तकस्थित रुद्रों से अभिप्राय है, गुणतत्त्व के भुवनों के अधिपति रुद्र। इस प्रकरण में सर्वत्र तत्त्व शब्द से तत् तत् तत्त्वों में स्थित भुवनों के अधिपतियों का ग्रहण करना चाहिये।
2. शैवागमों में शिवसमता को मोक्ष माना गया है। यह शिवसमता कैसे प्राप्त होती है? इस विषय में चारों प्रकार के शैवों में मतभेद है। अष्टप्रकरणस्थित सद्योज्योति शिवाचार्य की परमोक्षनिरासकारिका और रामकण्ठकृत व्याख्या में इसको देखा जा सकता है। शैवपरिभाषा में शिवसाम्यविषयक उत्पत्ति, संक्रान्ति, समावेश और अभिव्यक्तिनामक चार पक्षों का निरूपण संक्षेप में देखा जा सकता है (पृ.१५६-१५७)।

मोक्षं प्राप्नुवन्ति। [१]साधकदीक्षया शिवभक्तिशिवलिङ्गार्चनयोः सतोरपि पश्चाद् विद्येश्वरादिपदाभिलाषिणस्तत्पदं प्राप्नुवन्ति[२]। तत्पदस्थानां मध्ये [३]विरक्तास्तदानीमेव मुक्ता भवन्ति। नो चेत्, महासंहारकाले मुक्ता भवन्ति। निर्बीजदीक्षा तु तद्दीक्षोत्तरकालेऽनुष्ठेयानां सन्ध्यावन्दनशिवलिङ्गार्चनादीनां दीक्षाकाल एवाचार्येण संशोध्यानुष्ठितत्वात् स्त्रीबालवृद्धव्याधिभोगरता[४]ज्ञानां विधेया। सबीजदीक्षा तु समर्थानां समयिपुत्रकसाधकाचार्याणां विधेया। तद्दीक्षया भूतभविष्यद्रूपाणि द्विविधानि कर्माणि च[५], [६]एतत्परिपाकप्राप्तान्यशेषशरीराणि च, शरीराभावेन भोगाश्च विनश्यन्ति। शरीरकारणभूतानां कर्मणां शुद्धिकारकशरीराणि सुखदुःखान्यनुभवितव्यान्येव। [७]इत्थं त्रिविधानि कर्माणि विनश्यन्ति।

---

यह निर्वाण-दीक्षा [1]सद्योनिर्वाण और असद्योनिर्वाण के भेद से दो प्रकार की है। इसमें सद्योजात दीक्षा के तुरन्त बाद साधक मुक्त हो जाता है। असद्योजात निर्वाण-दीक्षा में दीक्षा के समय भूत और भविष्य के सभी कर्मों का शोधन किया जाता है। उस समय भुज्यमान शरीर के कारणीभूत वर्तमान कर्मों की शुद्धि होने पर साधक की आयु समाप्त हो जाती है, तब इस देह का पात हो जाने पर मुक्ति मिलती है। साधक-दीक्षा में शिवभक्ति और शिवलिंग का पूजन करते रहने पर विद्येश्वर आदि पदों के अभिलाषियों को अपने अभीप्सित पदों की प्राप्ति होती है। इन पदों में रहनेवालों के बीच कुछ विरक्त स्वभाव के साधक तुरन्त मुक्त हो जाते हैं। ऐसा न होने पर बचे साधक संहारकाल में मुक्त होते हैं। निर्बीजदीक्षा उनकी की जाती है, जो कि दीक्षा के बाद अनुष्ठेय सन्ध्यावन्दन, शिवलिंग-पूजन आदि के करने में असमर्थ हैं। ऐसे व्यक्तियों को आचार्य दीक्षा के समय ही इन कर्मों के अनुष्ठान से छुटकारा दिला देते हैं। स्त्री, बालक, वृद्ध, रोगी और भोगरत अज्ञ पुरुषों को यह दीक्षा दी जाती है। सबीजदीक्षा इन अनुष्ठानों में समर्थ समयी[2], पुत्रक, साधक और आचार्य को दी जाती है। इस दीक्षा से भूत और भविष्य

---

*१. 'साधक··· प्राप्नुवन्ति' नास्ति—ग.। २. प्रापयन्ति—क.। ३. विरताः'—ख.। ४. तानां—क., रताज्ञानानां—ग.। ५. 'च' नास्ति—ग.। ६. एत··· भोगाश्च' नास्ति—ख.। ७. 'इत्थं··· विनश्यन्ति' नास्ति—ख.।*

1. आगम-तन्त्रशास्त्र की सभी शाखाओं में दीक्षा के विविध आयामों का वर्णन मिलता है। विस्तार के लिये तान्त्रिक टीकाग्रन्थों, निबन्धग्रन्थों और श्रद्धेयचरण श्री श्री गोपीनाथ कविराज के "तान्त्रिक वाङ्मय में शाक्त दृष्टि" इत्यादि ग्रन्थों में संगृहीत दीक्षाविषयक निबन्धों को देखा जा सकता है।
2. समयी, पुत्रक, साधक और आचार्य नामक चार प्रकार के दीक्षितों के विषय में शैव, शाक्त और वैष्णव तन्त्रों में समान रूप से विचार किया गया है। इस विषय पर हमने सात्वतसंहिता के संस्कृत उपोद्घात (पृ.५४-६३) में विस्तार से विचार किया है।

**दीक्षोत्तरं पालनीया नियमाः**

इत्थं त्रिविधे कर्मणि विनश्यति सति दीक्षाया उपरि मरणान्तमुच्यमानशास्त्रीयनियमैरैहिक[१]वर्तमानशरीरकारणभूतस्य कर्मणः सहकारिमलाशुद्धेर्ज्ञानानि योगाश्च तपांसि च बुद्ध्यादिसाधनैः साध्यानीत्युक्तत्वादिह न मोक्षः, किन्तु परमेश्वरप्रसादात्मिकया दीक्षयैव मोक्षः, इतरैर्नास्ति। दीक्षोत्तरकाले आचारवैकल्ये बुद्धिपूर्वस्य दोषस्य प्रायश्चित्तेन शुद्धिः स्यात्, मन्त्रद्रव्यलोपयोश्च पवित्रारोपणेन शुद्धिः। अबुद्धिपूर्वस्य नियमलोपस्यान्त्येष्टिक्रियया शुद्धिः।

**विधिनिषेधौ**

दीक्षोत्तरकालेऽवश्यानुष्ठेयानि कर्माणि यमनियमसम्पत्तिः, सन्ध्यावन्दनम्, शिवलिङ्गार्चनम्, अग्निकार्यम्, गुरुवचनपालनम्, यथाशक्ति[२] माहेश्वरपूजादिकं

---

के सभी प्रकार के कर्म नष्ट हो जाते हैं। इन कर्मों का परिपाक हो जाने पर प्राप्त शरीर नष्ट हो जाता है और शरीर के अभाव में सर्वविध भोग भी नष्ट हो जाते हैं। वर्तमान शरीर के कारणीभूत कर्मों की शुद्धि (परिपाक) के लिये तो सुख, दुःख आदि का अनुभव करना ही पड़ता है। इस तरह से तीनों प्रकार के कर्मों का क्षय हो जाता है।

तीनों प्रकार के कर्मों के नष्ट हो जाने पर दीक्षा ग्रहण कर लेने के बाद मरण पर्यन्त उन नियमों का पालन करना पड़ता है, जिनकी कि स्वीकृति दीक्षा के समय उसने दी है। वर्तमान शरीर के कारणीभूत प्रारब्ध कर्मों का सहकारी कारण मलाशुद्धि को माना गया है। अतः ज्ञान, योग और तप की सहायता से अपनी बुद्धि को निर्मल बनाकर इस अशुद्धि को दूर करना चाहिये। इसके बिना जीवात्मा को मोक्ष की प्राप्ति नहीं हो सकती। परमेश्वर का प्रसाद (अनुग्रह) होने पर सद्गुरु से प्राप्त हुई दीक्षा से ही मोक्ष मिलता है, मोक्ष अन्य किसी प्रकार से नहीं मिल सकता। दीक्षा-ग्रहण करने के बाद यदि नियमों के पालन में बुद्धिपूर्वक कोई त्रुटि हो जाती है, अर्थात् जो त्रुटि हुई, उसकी जानकारी हो जाती है, तो उसकी शुद्धि के लिये प्रायश्चित्त करना चाहिये। मन्त्र और द्रव्य का लोप (अभाव) हो जाने पर उसकी शुद्धि के लिये शास्त्रों में पवित्रारोपण[1] का विधान किया गया है। जिन त्रुटियों की साधक को जानकारी नहीं

---

*१. 'ऐहिक' नास्ति–ग.। २. मति–ग.।*

1. पवित्रारोपण के विषय में पृ. ३९ की दूसरी टिप्पणी देखिये।

चानुष्ठेयानीति। अननुष्ठेयानि कर्माणि निर्माल्यभक्षणं च, शिवनिन्दा, [१]गुरुनिन्दा, शिवशास्त्रप्राप्ताचारनिन्दा च, देव[२]द्रव्याद्युपभोगश्च, भूतहिंसादिकं च।

**मुक्तात्मनो लक्षणम्**

एवं दीक्षितस्य तस्य[३] उक्तानुष्ठानवतो मुक्तस्यात्मनो लक्षणमाणवकार्ममायीय-बैन्दवरोधशक्त्याख्यपाशपञ्चकाद्[४] विमुक्तिश्च[५], परमेश्वरवत् सर्वज्ञता-सर्वकर्तृता-नित्यतृप्तता-अनादिसिद्ध[६]स्वतन्त्रता-अलुप्तशक्तिता-अनन्तशक्तिमत्ता चेति षाड्गुण्य-स्वरूपप्राप्तिश्च भवति[७]। एवंविधानां प्राप्तात्मनां परमेश्वरवत् सृष्ट्यादिपञ्चकृत्यं

---

हो पाती, उनकी शुद्धि उसकी अन्त्येष्टि के समय की जाती है।

दीक्षा-ग्रहण के बाद अवश्य अनुष्ठेय कर्म ये हैं —[1]यम और नियम का उसे पालन करना चाहिये। सन्ध्यावन्दन, शिवलिंग का पूजन, अग्निकार्य (हवन), गुरु के वचन का पालन और यथाशक्ति शिवभक्तों का पूजन उसे प्रतिदिन करते रहना चाहिये। जिन कार्यों का परित्याग करना चाहिये, वे निषिद्ध कर्म ये हैं — निर्माल्य-भक्षण, शिवनिन्दा, गुरुनिन्दा, शैवशास्त्रों में वर्णित आचार-विचार की निन्दा, देवता के निमित्त अर्पित द्रव्य आदि का स्वयं उपयोग और प्राणियों की हिंसा। अभिप्राय यह है कि दीक्षित व्यक्ति को इन निषिद्ध कार्यों का सदा वर्जन करना चाहिये।

दीक्षा-प्राप्ति के बाद शास्त्रोक्त कर्मों का यथाविधि अनुष्ठान में निरत रहनेवाले मुक्त स्थिति में पहुँचे हुए व्यक्ति में ये लक्षण प्रकट होते हैं — आणव, कार्म, मायीय, बैन्दव और रोधशक्ति नामक पाँचों पाशों[2] से वह मुक्त हो जाता है। परमेश्वर के समान उसमें भी [3]सर्वज्ञता, सर्वकर्तृता, नित्यतृप्तता, अनादिसिद्ध स्वतन्त्रता, अलुप्तशक्तिता और

---

*१. 'गुरुनिन्दा' नास्ति–ग.। २. वृत्त्या–ख.। ३. 'तस्य' नास्ति–क.ग.। ४. 'पाशपञ्चकाद्' नास्ति–ख.। ५. विमुक्तश्च–क.। ६. सिद्धि–ख., बीज–म.। ७. भवन्ति–ख.ग.।*

1. पाशुपत-मत के ग्रन्थों, स्मृतियों और पुराणों में भी यम और नियम के दस-दस भेदों का वर्णन मिलता है।
2. पाँच प्रकार के पाशों अथवा मलों के विषय में पृ. ३ की पहली टिप्पणी देखिये।
3. सर्वज्ञता आदि छः अंगों अथवा गुणों का विवरण शैवागम की सभी शाखाओं तथा पुराणों में भी मिलता है। पांचरात्र आगम तथा विष्णुपुराण आदि में वर्णित षाड्गुण्य की तथा सर्वज्ञता आदि छः अंगों की तुलना स्पन्दप्रदीपिकाकार उत्पल वैष्णव ने की है। लुप्ता० उपो० (पृ.१९०-१९१) की तीसरी टिप्पणी देखिये।

नास्ति, विषयासद्भावश्च। रागद्वेषादीनामविद्य[१]मानतया च सृष्ट्यन्तरे कर्तृताया-मकरणम्। पञ्चविधकृत्येन तु परमेश्वर एव परानुग्रहं करोति।

[२]इति सर्वमतेष्विष्टा सा सिद्धान्तप्रकाशिका ।
सर्वात्मशम्भुना व्यक्ता कल्पिता शैवसंमता ।।

**।। समाप्तश्चायं ग्रन्थः ।।**

।। [३]हरिः ॐ शुभम् ।।

---

अनन्तशक्तिमत्ता — ये छः माहेश्वर गुण उसमें भी अभिव्यक्त हो उठते हैं, और उसको शिवस्वरूप की प्राप्ति हो जाती है, किन्तु इस तरह से अपने स्वरूप में [1]प्रतिष्ठित मुक्तात्मा में परमेश्वर के समान सृष्टि आदि पंचकृत्य करने की [2]सामर्थ्य नहीं आती। तो भी उसे सभी प्रकार के विषयों के बन्धन से मुक्ति अवश्य मिल जाती है। विषयों के अभाव में राग-द्वेष आदि दोषों के न रहने से भविष्य की सृष्टि में उसकी कोई कर्तृता नहीं रह जाती, अर्थात् आगे की सृष्टि में उसका जन्म नहीं होता। [3]पंचविध कृत्य केवल परमेश्वर में ही रहते हैं और इनकी सहायता से केवल ईश्वर ही दूसरों के ऊपर अनुग्रह कर सकता है, अर्थात् परमेश्वर के अतिरिक्त अन्य किसीमें पंचकृत्य करने की सामर्थ्य नहीं है।

इस प्रकार सभी मतों का प्रतिपादन करनेवाली इस सिद्धान्तप्रकाशिका की [4]सर्वात्मशंभु ने शैवसिद्धान्त की पद्धति के अनुसार स्पष्ट कल्पना की है।।

इस प्रकार यह ग्रन्थ समाप्त होता है ।।

**॥ हरिः ॐ शुभम् ॥**

---

*१. दीनां विद्यया तदा-क.। २. श्लोकोऽयं नास्ति-ग.। ३. 'हरिः ॐ शुभम्' नास्ति-ख.।*

1. "स्वरूपप्रतिष्ठा वा चितिशक्तेः" (४.३३) इस योगसूत्र में स्वरूपप्रतिष्ठा की व्याख्या देखनी चाहिये।
2. पृ. ३२ की तीसरी टिप्पणी में उद्धृत अवधूत सिद्ध के वचन का अवलोकन कीजिये।
3. शैव, वैष्णव और शाक्त-क्रमदर्शन में प्रतिपादित पंचविध कृत्यों का विवरण सात्वतसंहिता के संस्कृत उपोद्घात (पृ.३१, टि.२) में तथा लुप्ता० उपो० (पृ.१२७-१२९ तथा टि.) में देखिये। क्रमदर्शन में शिव के समान जीव की भी पंचकृत्यकारिता बताई गई है। प्रत्यभिज्ञाहृदय, दशरूपक आदि में निरूपित पंचकृत्यों की सूचना हमारे ग्रन्थ "निगमागमीयं संस्कृतिदर्शनम्" (पृ.२५-२६ तथा टि.) से प्राप्त की जा सकती है।
4. ग्रन्थकार सर्वात्मशंभु का यथोपलब्ध परिचय प्रस्तावना में दिया जा रहा है।



# प्रस्थानभेदः

## मधुसूदनसरस्वतीकृतः

अथ सर्वेषां शास्त्राणां भगवत्येव तात्पर्यं साक्षात् परम्परया वेति समासेन तेषां प्रस्थानभेदोऽत्रोद्दिश्यते। तथाहि-ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाश्चत्वारः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति वेदाङ्गानि षट्। पुराणन्यायमीमांसा धर्मशास्त्राणि चेति चत्वार्युपाङ्गानि। अत्रोपपुराणानामपि पुराणेऽन्तर्भावः। वैशेषिकशास्त्रस्य न्याये। वेदान्तशास्त्रस्य मीमांसायाम्। महाभारतरामायणयोः सांख्यपातञ्जल-पाशुपतवैष्णवादीनां च धर्मशास्त्रे। मिलित्वा चतुर्दश विद्याः। तथा चोक्तं याज्ञवल्क्येन —

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।। इति।

(या० स्मृ० १.३)

एता एव चतुर्भिरुपवेदैः सहिता अष्टादश विद्या भवन्ति। आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः। सर्वेषां चाऽऽस्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि, अन्येषामप्येकदेशिनामेतेष्वेवान्तर्भावात्।

ननु नास्तिकानामपि प्रस्थानान्तराणि सन्ति, तान्येतेष्वनन्तर्भावात् पृथग् गणयितुमुचितानि। तथाहि-शून्यवादेनैकं प्रस्थानं माध्यमिकानाम्। क्षणिक-विज्ञानमात्रवादेनान्यद्योगाचाराणाम्। ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादेनापरं सौत्रान्तिकानाम्। प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थवादेनापरं वैभाषिकाणाम्। एवं सौगतानां प्रस्थानचतुष्टयम्। तथा देहात्मवादेनैकं प्रस्थानं चार्वाकाणाम्। एवं देहाद्यतिरिक्त-देहपरिमाणात्मवादेन द्वितीयं प्रस्थानं दिगम्बराणाम्। एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि। तानि कस्मान्नोच्यन्ते? सत्यम्, वेदबाह्यत्वात् तेषां म्लेच्छादिप्रस्थानवत् परम्परयाऽपि पुरुषार्थानुपयोगित्वादुपेक्षणीयत्वमेव। इह तु साक्षाद्वा परम्परया वा

पुमर्थोपयोगिनां वेदोपकारकाणामेव प्रस्थानानां भेदो दर्शित:। ततो न न्यूनत्वशङ्कावकाश:। अथ संक्षेपेणैषां प्रस्थानानां स्वरूपभेदहेतुप्रयोजनभेद उच्यते बालानां व्युत्पत्तये।

तत्र धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यं वेद:। स च मन्त्रब्राह्मणात्मक:। तत्र मन्त्रा अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशका:। तेऽपि त्रिविधा:, ऋग्यजु:सामभेदात्। तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋच: "अग्निमीळे पुरोहितम्" इत्याद्या:। ता एव गीतिविशिष्टा: सामानि। तदुभयविलक्षणानि यजूंषि। "अग्नीदग्नीन् विहर" इत्यादिसंबोधनरूपा निगदमन्त्रा अपि यजुरन्तर्भूता एव। तदेवं निरूपिता मन्त्रा:।

ब्राह्मणमपि त्रिविधम्—विधिरूपमर्थवादरूपं तदुभयविलक्षणरूपं च। तत्र शब्दभावना विधिरिति भाट्टा:। नियोगो विधिरिति प्राभाकरा:। इष्टसाधनता विधिरिति तार्किकादय: सर्वे। विधिरपि चतुर्विध:—उत्पत्त्यधिकारविनियोगप्रयोगभेदात्। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिराग्नेयोऽष्टाकपालो भवतीत्यादि:। सेतिकर्तव्यताकस्य करणस्य यागादे: फलसम्बन्धबोधको विधिरधिकारविधिर्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादि:। अङ्गसम्बन्धबोधको विधिर्विनियोगविधिर्व्रीहिभिर्यजेत, समिधो यजतीत्यादि:। साङ्गप्रधानकर्मप्रयोगैक्यबोधक: पूर्वोक्तविधित्रयमेलनरूप: प्रयोगविधि:। स च श्रौत इत्येके। कल्प्य इत्यपरे। कर्मस्वरूपं च द्विविधम्—गुणकर्मार्थकर्म च। तत्र क्रतुकर्मकारकाण्याश्रित्य विहितं गुणकर्म। तदपि चतुर्विधम्—उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात्। तत्र वसन्ते ब्राह्मणोऽग्नीनादधीत, यूपं तक्षतीत्यादावाधानतक्षणादिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्ति:। स्वाध्यायोऽध्येतव्य:, गां पयो दोग्धीत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपय:-प्रभृते: प्राप्ति:। सोममभिषुणोति, व्रीहीनवहन्ति, आज्यं विलापयतीत्यादावभिषवावघातविलापनै: सोमादीनां विकार:। व्रीहीन् प्रोक्षति, पत्न्यवेक्षत इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्याादिद्रव्याणां संस्कार:। एतच्चतुष्टयं चाङ्गमेव। तथा क्रतुकारकाण्याश्रित्य विहितमर्थकर्म च द्विविधम्—अङ्गं प्रधानं च। अन्यार्थमङ्गम्। अनन्यार्थं प्रधानम्। अङ्गमपि द्विविधम्—संनिपत्योपकारकमारादुपकारकं च। तत्र प्रधानस्वरूपनिर्वाहकं प्रथमम्। फलोपकारि द्वितीयम्। एवं संपूर्णाङ्गसहितो विधि: प्रकृति:। विकलाङ्गसंयुक्तो विधिर्विकृति:। तदुभयविलक्षणो विधिर्दर्विहोम:। एवमन्यदप्यूह्यम्। तदेवं निरूपितो विधिभाग:।

प्राशस्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवाद:। स च त्रिविध:—गुणवादोऽनुवादो भूतार्थवादश्चेति। तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवाद:, आदित्यो

यूप इत्यादिः। प्रमाणान्तरप्राप्त्यर्थबोधकोऽनुवादः, अग्निर्हिमस्य भेषजमित्यादिः। प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः, इन्द्रो वृत्राय वज्रमुदयच्छदित्यादिः। तदुक्तम् —

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ।। इति।

तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां स्वार्थेऽपि प्रामाण्यं देवताधिकरणन्यायात्। अबाधिताज्ञातज्ञापकत्वं हि प्रामाण्यम्। तच्चाबाधितविषयत्वाज्ज्ञातज्ञापकत्वाच्च न गुणवादानुवादयोः। भूतार्थस्य तु स्वार्थे तात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं विहन्यते। तदेवं निरूपितोऽर्थवादभागः।

विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम्। तच्चाज्ञातज्ञापकत्वेऽप्यनुष्ठाना-प्रतिपादकत्वान्न विधिः, स्वतः पुरुषार्थपरमानन्दज्ञानात्मकब्रह्मणि स्वार्थ उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतः प्रमाणभूतं सर्वानपि विधीनन्तः-करणशुद्धिद्वारा स्वविशेषतामापादयदन्यशेषत्वाभावाच्च। तस्मादुभयविलक्षणमेव वेदान्तवाक्यम्। तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते। क्वचिद् विधिपदरहितप्रमाणवाक्यत्वेन भूतार्थवाद इति व्यवह्रियत इति न दोषः। तदेवं निरूपितं त्रिविधं ब्राह्मणम्।

एवं च कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः। स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदेन भिन्नः। तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यवप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन। ब्राह्मयाजमानप्रयोगौ त्वत्रैवान्तर्भूतौ। अथर्ववेदस्तु यज्ञानुपयुक्तः शान्तिकपौष्टिकाभिचारादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव। एवं प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाः। एवं च कर्मकाण्डे व्यापारभेदेऽपि सर्वासां वेदशाखानामेकरूपत्वमेव ब्रह्मकाण्डे।

इति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः। अथाङ्गानामुच्यते। तत्र शिक्षाया उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारविशेषज्ञानं प्रयोजनम्, तदभावे मन्त्राणामनर्थकत्वात्। तथा चोक्तम् —

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ।। इति।
(पा०शि०५२)

तत्र सर्ववेदसाधारणी शिक्षा। अथ शीक्षां प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिना प्रकाशिता। प्रतिवेदशाखं च भिन्नरूपा प्रातिशाख्यसंज्ञिताऽन्यैरेव मुनिभिः प्रदर्शिता। एवं वैदिकपदसाधुत्वज्ञानेनोहापोहादिकं व्याकरणस्य प्रयोजनम्। तच्च वृद्धिरादैजित्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव विरचितम्। पाणिनीयसूत्रेषु कात्यायनेन मुनिना वार्त्तिकं विरचितम्। तद्वार्त्तिकस्योपरि च भगवता पतञ्जलिना महाभाष्यमारचि। तदेतत्त्रिमुनि व्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते। कौमारादिव्याकरणानि तु न वेदाङ्गानि, किन्तु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम्।

एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे ज्ञाते वैदिकमन्त्रपदानामर्थ-ज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन "समाम्नायः समाम्नातः स व्याख्यातव्यः" इत्यादित्रयोदशाध्यायात्मकं निरुक्तमारचितम्। तत्र च नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदार्थानामर्थः प्रकाशितः। मन्त्राणां चानुष्ठेयार्थप्रका-शनद्वारेणैव करणत्वात् पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम्, अन्यथाऽनुष्ठानासंभवात्, "सृण्येव जर्भरी तुर्फरीतू" इत्यादिदुरूहाणां शब्दानां (निरु० १३.५) प्रकारान्तरेणार्थज्ञानस्यासंभवनीयत्वाच्च। एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव। तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः।

एवमृङ्मन्त्राणां पादबद्धच्छन्दोविशेषविशिष्टत्वात्तदज्ञाने च निन्दाश्रवणाच्छन्दो-विशेषनिमित्तानुष्ठानविशेषविधानाच्च छन्दोज्ञानाकाङ्क्षायां तत्प्रकाशनाय "धीः श्रीः स्त्रीम्" इत्याद्यष्टाध्यायात्मिका छन्दोविचितिर्भगवता पिङ्गलेन विरचिता। तत्राप्यलौकिकमित्यन्तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति सप्तच्छन्दांसि सावान्तरभेदानि निरूपितानि। अथ लौकिकमित्यारभ्याध्यायपञ्चकेन पुराणेतिहासादावुपयोगीनि लौकिकानि च्छन्दांसि प्रसङ्गान्निरूपितानि, व्याकरणे लौकिकपदनिरूपणवत्।

एवं वैदिककर्माङ्गदर्शादिकालज्ञानाय ज्यौतिषं भगवताऽऽदित्येन गर्गादिभिश्च प्रणीतं बहुविधमेव।

शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय कल्पसूत्राणि। तानि च प्रयोगत्रयभेदात्त्रिविधानि-तत्र हौत्रप्रयोगप्रतिपादकान्याश्वलायनशाङ्खायना-दिप्रणीतानि, आध्वर्यवप्रयोगप्रतिपादकानि बौधायनापस्तम्बकात्यायनादिप्रणीतानि, औद्गात्रप्रयोगप्रतिपादकानि लाट्यायनद्राह्यायणादिप्रणीतानि।

एवं निरूपित: षण्णामङ्गानां प्रयोजनभेद:। चतुर्णामुपाङ्गानामधुनोच्यते। तत्र सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणानि। तानि च ब्राह्मं पाद्मं वैष्णवं शैवं भागवतं नारदीयं मार्कण्डेयमाग्नेयं भविष्यं ब्रह्मवैवर्तं लैङ्गं वाराहं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं ब्रह्माण्डं चेत्यष्टादश।

आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वरा: ।
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ॥
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदु: ।
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदु: ॥
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ।
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं तत: परम् ॥
तत: कालीपुराणाख्यं वासिष्ठं मुनिपुङ्गवा: ।
ततो वासिष्ठलैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ॥
तत: साम्बपुराणाख्यं तत: सौरं महाद्भुतम् ।
पाराशरं तत: प्रोक्तं मारीचाख्यं तत: परम् ॥
भार्गवाख्यं तत: प्रोक्तं सर्वधर्मार्थसाधकम् ।

एवमुपपुराणान्यनेकप्रकाराणि द्रष्टव्यानि।

न्याय आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता। प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्यानां षोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानं तस्या: प्रयोजनम्। एवं दशाध्यायं वैशेषिकं शास्त्रं कणादेन प्रणीतम्। द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानामभावसप्तमानां साधर्म्यवैधर्म्याभ्यां व्युत्पादनं तस्य प्रयोजनम्। एतदपि न्यायपदेनोक्तम्।

एवं मीमांसाऽपि द्विविधा - कर्ममीमांसा शारीरकमीमांसा च। तत्र द्वादशाध्यायी कर्ममीमांसा "अथातो धर्मजिज्ञासा" इत्यादि "अन्वाहार्ये च दर्शनात्" इत्यन्ता भगवता जैमिनिना प्रणीता। तत्र धर्मप्रमाणम्, धर्मभेदाभेदौ, शेषशेषिभाव:, क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेष:, श्रुत्यर्थपठनादिभि: क्रमभेद:, अधिकारविशेष:, सामान्यातिदेश:, विशेषातिदेश:, ऊह:, बाध:, तन्त्रम्, प्रसङ्गश्चेति क्रमेण द्वादशाध्यायानामर्था:। तथा संकर्षणकाण्डमप्यध्यायचतुष्टयात्मकं जैमिनिप्रणीतम्। तच्च देवताकाण्डसंज्ञया प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात् कर्ममीमांसान्तर्गतमेव।

तथा चतुरध्यायी शारीरकमीमांसा "अथातो ब्रह्मजिज्ञासा" इत्यादिः, "अनावृत्तिः शब्दात्" इत्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुः श्रवणाख्यविचारप्रतिपादकान् न्यायानुपदर्शयन्ती भगवता बादरायणेन कृता। तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात् परम्परया वा प्रत्यगभिन्नाद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्यायेन प्रदर्शितः। तत्र च प्रथमे पादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि, द्वितीये त्वस्पष्टलिङ्गान्युपास्यब्रह्मविषयाणि, तृतीये पादेऽस्पष्टब्रह्मलिङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेण वाक्यविचारः समापितः। चतुर्थपादे तु प्रधानविषयत्वेन संदिह्यमानान्यव्यक्ताजादिपदानि चिन्तितानि। एवं वेदान्तानामद्वये ब्रह्मणि समन्वये सिद्धे तत्र संभावितस्मृतितर्कादिप्रयुक्तैस्तर्कैर्विरोधमाशङ्क्य तत्परिहारः क्रियत इत्यविरोधो द्वितीयाध्यायेन दर्शितः। तत्राऽऽद्यपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैस्तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीये पादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम्, स्वपक्षस्थापनपरपक्षनिवारणरूपपर्वद्वयात्मकत्वाद्विचारस्य। तृतीये पादे महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागेन परिहृतः, उत्तरभागेन तु जीवविषयाणाम्। चतुर्थपादे त्विन्द्रियविषयश्रुतीनां विरोधः परिहृतः। तृतीयेऽध्याये साधननिरूपणम्। तत्र प्रथमे पादे जीवस्य परलोकगमनागमननिरूपणेन वैराग्यं निरूपितम्। द्वितीये पादे पूर्वभागेन त्वंपदार्थः शोधितः, उत्तरभागेन तत्पदार्थः। तृतीये पादे निर्गुणे ब्रह्मणि नानाशाखापठितपुनरुक्तपदोपसंहारः कृतः, प्रसङ्गाच्च सगुणनिर्गुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ। चतुर्थे पादे निर्गुणब्रह्मविद्याया बहिरङ्गसाधनान्याश्रमयज्ञादीन्यन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च निरूपितानि। चतुर्थेऽध्याये सगुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः। तत्र प्रथमे पादे श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म साक्षात्कृत्य जीवतः पापपुण्याऽलेपलक्षणा जीवन्मुक्तिरभिहिता। द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः। तृतीये पादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः। चतुर्थे पादे पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता, उत्तरभागेन सगुणब्रह्मविदो ब्रह्मलोकस्थितिरुक्तेति। इदमेव सर्वशास्त्राणां मूर्धन्यम्। शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशङ्करभगवत्पादोदितप्रकारेणेति रहस्यम्।

एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षसंवर्तशातातपपराशरगौतमशङ्खलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीन-

सिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि। एवं व्यासकृतं महाभारतं वाल्मीकिकृतं रामायणं च धर्मशास्त्र एवान्तर्भूतं स्वयमितिहासत्वेन प्रसिद्धम्। सांख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्देशात् पृथगेव संगतिर्वाच्या।

अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः। तत्राऽऽयुर्वेदस्याष्टौ स्थानानि भवन्ति — सूत्रं शारीरमैन्द्रियं चिकित्सा निदानं विमानं विकल्पः सिद्धिश्चेति। ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यादिभिरुपदिष्टश्चरकेण संक्षिप्तः। तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम्। एवं वाग्भटादिनाऽपि बहुधेति न शास्त्रभेदः। कामशास्त्रमप्यायुर्वेदान्तर्गतमेव, तत्रैव सुश्रुतेन वाजीकरणाख्यकामशास्त्राभिधानात्। तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतम्। तस्य च विषयवैराग्यमेव प्रयोजनम्, शास्त्रोद्दीपितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात्। चिकित्साशास्त्रस्य रोगतत्साधनरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम्।

एवं धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः। तत्र प्रथमो दीक्षापादः, द्वितीयः संग्रहपादः, तृतीयः सिद्धिपादः, चतुर्थः प्रयोगपादः। तत्र प्रथमे पादे धनुर्लक्षणमधिकारिनिरूपणं च कृतम्। अत्र धनुःशब्दश्चापे रूढोऽपि धनुर्विधायुधे प्रवर्तते। तच्चतुर्विधम्-मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तम्। मुक्तं चक्रादि, अमुक्तं खड्गादि, मुक्तामुक्तं शल्यावान्तरभेदादि, यन्त्रमुक्तं शरादि। तत्र मुक्तमस्त्रमुच्यते, अमुक्तं शस्त्रमित्युच्यते। तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदादनेकविधम्। एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां तदनुयायिनां च, ते सर्वे चतुर्विधाः—पदातिरथगजतुरगारूढाः। दीक्षाभिषेकशकुनमङ्गलकरणादिकं च सर्वमपि प्रथमे पादे निरूपितम्। सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीयपादे। गुरुसंप्रदायसिद्धानां शस्त्रविशेषाणां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे। एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्चतुर्थपादे निरूपितः। क्षत्रियाणां स्वधर्माचरणं युद्धम्। दुष्टस्य दण्डश्चोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम्। एवं च ब्रह्मप्रजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशास्त्रम्।

एवं गान्धर्ववेदो भगवता भरतेन प्रणीतः। स गीतवाद्यनृत्यभेदेन बहुविधः। देवताराधनं निर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम्।

एवमर्थशास्त्रमपि बहुविधम्। नीतिशास्त्रमश्वशास्त्रं शिल्पशास्त्रं सूपशास्त्रं चतुःषष्टिकलाशास्त्रं चेति। तत्सर्वं नानामुनिभिः प्रणीतम्। अस्य च सर्वस्य लौकिकवत् प्रयोजनभेदो द्रष्टव्यः।

एवमष्टादशविद्यास्त्रयीशब्देनोक्ताः, अन्यथा न्यूनताप्रसङ्गात्। तथा सांख्यशास्त्रं भगवता कपिलेन प्रणीतम्। तच्च ''अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः'' इत्यादि षडध्यायम्। तत्र प्रथमेऽध्याये विषया निरूपिताः, द्वितीयेऽध्याये प्रधानकार्याणि, तृतीयेऽध्याये विषयेभ्यो वैराग्यम्, चतुर्थेऽध्याये विरक्तानां पिङ्गलाकुररादीनामाख्यायिकाः, पञ्चमेऽध्याये परपक्षनिर्णयः, षष्ठेऽध्याये सर्वार्थसंक्षेपः। प्रकृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनम्।

तथा योगशास्त्रं भगवता पतञ्जलिना प्रणीतम् ''अथ योगानुशासनम्'' इत्यादि-पादचतुष्टयात्मकम्। तत्र प्रथमे पादे चित्तवृत्तिनिरोधात्मकः समाधिरभ्यासवैराग्यरूपं च तत्साधनं निरूपितम्, द्वितीये पादे विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टाङ्गानि निरूपितानि, तृतीये पादे योगिविभूतयः, चतुर्थे पादे कैवल्यमिति। तस्य च विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनम्।

तथा पशुपतिमतं पाशुपतं शास्त्रं पशुपतिना पशुपाशविमोक्षणाय ''अथातः पाशुपतं योगविधिं व्याख्यास्यामः'' इत्यादि पञ्चाध्यायं विरचितम्। तत्राध्यायपञ्चकेनापि कार्यरूपो जीवः पशुः, कारणं पतिरीश्वरः, योगः पशुपतौ चित्तसमाधानम्, विधिर्भस्मना त्रिषवणस्नानादिश्च निरूपितः, दुःखान्तसंज्ञो मोक्षश्च प्रयोजनम्। एत एव कार्यकारणयोगविधिदुःखान्ता इत्याख्यायन्ते।

एवं वैष्णवं नारदादिभिः कृतं पाञ्चरात्रम्। तत्र वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पदार्था निरूपिताः। भगवान् वासुदेवः सर्वकारणं परमेश्वरः। तस्मादुत्पद्यते सङ्कर्षणाख्यो जीवः, तस्मान्मनः प्रद्युम्नः, तस्मादनिरुद्धोऽहङ्कारः। सर्वे चैते भगवतो वासुदेवस्यैवांशभूतास्तदभिन्ना एवेति भगवतो वासुदेवस्य मनोवाक्कायवृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीत्यादि च निरूपितम्।

तदेवं दर्शितः प्रस्थानभेदः। सर्वेषां च संक्षेपेण त्रिविध एव प्रस्थानभेदः। तत्राऽऽरम्भवाद एकः, परिणामवादो द्वितीयः, विवर्तवादस्तृतीयः। पार्थिवाप्यतैजसवाय-वीयाश्चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्माण्डपर्यन्तं जगदारभन्ते, असदेव

कार्यं कारकव्यापारादुत्पद्यत इति प्रथमस्तार्किकाणां मीमांसकानां च। सत्त्वरजस्तमोगुणात्मकं प्रधानमेव महदहङ्कारादिक्रमेण जगदाकारेण परिणमते, पूर्वमपि सूक्ष्मरूपेण सदेव कार्यं कारणव्यापारेणाभिव्यज्यत इति द्वितीयः पक्षः सांख्ययोगपातञ्जलपाशुपतानाम्। ब्रह्मणः परिणामो जगदिति वैष्णवानाम्। स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्पत इति तृतीयः पक्षो ब्रह्मवादिनाम्। सर्वेषां प्रस्थानकर्तृणां मुनीनां विवर्तवादपर्यवसानेनाद्वितीये परमेश्वर एव प्रतिपाद्ये तात्पर्यम्। नहि ते मुनयो भ्रान्ताः, सर्वज्ञत्वात् तेषाम्। किन्तु बहिर्विषयप्रवणानामापाततः पुरुषार्थे प्रवेशो न संभवतीति नास्तिक्यवारणाय तैः प्रकारभेदाः प्रदर्शिताः। तत्र तेषां तात्पर्यमबुद्ध्वा वेदविरुद्धेऽप्यर्थे तात्पर्यमुत्प्रेक्ष्यमाणास्तन्मतमेवोपादेयत्वेन गृह्णन्तो जना नानापथजुषो भवन्तीति सर्वमनवद्यम्।।

**।। इति श्रीमधुसूदनसरस्वतीविरचितः प्रस्थानभेदः ।।**



# विशिष्टपदानुक्रमणी

# सहायक-ग्रन्थसूची

*अनुभवसूत्रम्* — तन्त्रसंग्रह, भा.१, पृ. १२९-१७४, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी, सन् १९७०

*अमरकोशः* — सुधाव्याख्यासहितः, निर्णयसागर प्रेस, बम्बई, सन् १९२९

*अष्टप्रकरणम्* — तत्त्वप्रकाश-तत्त्वसंग्रह-तत्त्वत्रयनिर्णय-रत्नत्रय-भोगकारिका-नादकारिका-मोक्षकारिका-परमोक्षनिरासकारिकाख्यप्रकरणाष्टकात्मकम्, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी, सन् १९८८

*अहिर्बुध्न्यसंहिता* — पांचरात्र आगम (दो भाग), अड्यार लाइब्रेरी, मद्रास, द्वितीय संस्करण, सन् १९६६

*आगम और तन्त्रशास्त्र* — प. व्रजवल्लभ द्विवेदी, परिमल पब्लिकेशंस, दिल्ली, सन् १९८४

*ऋग्वेदः* — मूलमात्रम्, सातवलेकर संस्करण, स्वाध्याय मण्डल, पारडी (जि. बलसाड़)।

*ऐतरेयारण्यकम्* — आनन्दाश्रम संस्कृत सिरीज, पूना, संवत् १९९८

*कर्मकाण्डक्रमावली* — (सोमशम्भुपद्धतिः), कश्मीर ग्रन्थावली, श्रीनगर, सन् १९४७

*कामसूत्रम्* — जयमङ्गलाटीकासहितम्, काशी संस्कृत सिरीज, वाराणसी, सन् १९८६

*किरणागमः* — विद्यापादः, ओरियण्टल इंस्टीट्यूट, नेपोली (इटली), सन् १९७५

*कूर्मपुराणम्* — मनसुखराय मोर, कलकत्ता, सन् १९६२

*कूर्मपुराण : धर्म और दर्शन* — डॉ. करुणा एस. त्रिवेदी, मोतीलाल बनारसीदास, वाराणसी, सन् १९९४

*गणकारिका* — गायकवाड़ ओरियण्टल सिरीज, बड़ोदा, सन् १९६६

*चन्द्रज्ञानागमः* — शैवभारती शोध प्रतिष्ठान, जंगमवाड़ी मठ, वाराणसी, सन् १९९४

*जयाख्यसंहिता* — पांचरात्र आगम, गायकवाड़ ओरियण्टल सिरीज, बड़ोदा, द्वितीय संस्करण, सन् १९६७

*तत्त्वप्रकाशः* — अष्टप्रकरण द्रष्टव्य।

*तत्त्वसंग्रहः* — अष्टप्रकरण द्रष्टव्य।

*तन्त्रयात्रा* — प. व्रजवल्लभ द्विवेदी, रत्ना पब्लिकेशंस, कमच्छा, वाराणसी, सन् १९८३

*तन्त्रालोकः* — विवेकव्याख्यासहितः (१२ भाग), कश्मीर संस्कृत ग्रन्थावली, श्रीनगर, सन् १९१८-३८

*तान्त्रिक वाङ्मय में शाक्तदृष्टि* — म. म. गोपीनाथ कविराज, बिहार राष्ट्रभाषा परिषद्, पटना, सन् १९६३

*धर्मशास्त्र का इतिहास* — हिन्दी अनुवाद, पंचम खण्ड, हिन्दी समिति, लखनऊ, सन् १९७५

*नादकारिका* — अष्टप्रकरण द्रष्टव्य।

*नामसंगीति* — सटीका, सम्पा. डॉ. बनारसीलाल, केन्द्रीय उच्च तिब्बती शिक्षा संस्थान, सारनाथ, वाराणसी, सन् १९९४

*निगमागम संस्कृति* — प. व्रजवल्लभ द्विवेदी, वीरशैव अनुसन्धान संस्थान, जंगमवाड़ी मठ, वाराणसी, सन् १९९२

*निगमागमीयं संस्कृतिदर्शनम्* — शैवभारती शोध प्रतिष्ठान, जंगमवाड़ी मठ, वाराणसी, सन् १९९५

*नेत्रतन्त्रम्* — उद्योतसहितम्, परिमल पब्लिकेशंस, दिल्ली, सन् १९८५

*न्यायमञ्जरी* — जयन्तभट्टविरचिता, काशी संस्कृत सिरीज, वाराणसी, दो भाग, सन् १९३४

*न्यू कैटलागस कैटलागरम्* — (१३ भाग) मद्रास विश्वविद्यालय, मद्रास, सन् १९६८-१९९१

*परमार्थसारः* — योगराजकृतवृत्तिसहितः, कश्मीर संस्कृत ग्रन्थावली, श्रीनगर, सन् १९१६

*परमोक्षनिरासकारिका* — अष्टप्रकरण द्रष्टव्य।

*पातञ्जलयोगसूत्रं सभाष्यम्* — आनन्दाश्रम मुद्रणालय, पूना, सन् १९३२

*पाशुपतसूत्रं सभाष्यम्* — त्रिवेन्द्रं संस्कृत ग्रन्थमाला, त्रिवेन्द्रम्, सन् १९४०

*पौराणिक कोश* — ज्ञानमण्डल मुद्रणालय, वाराणसी, सन् १९८६

*प्रशस्तपादभाष्यम्* — व्योमशिवकृतव्योमवतीव्याख्यासहितम्, चौखम्बा संस्कृत सिरीज, वाराणसी, सन् १९२४–३१

*प्रशस्तपादभाष्यम्* — श्रीधरभट्टकृतन्यायकन्दलीटीकासहितम्, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी, सन् १९६३

*ब्रह्मसूत्रभाष्यम्* — भास्कराचार्यविरचितम्, चौखम्बा संस्कृत सिरीज, वाराणसी, सन् १९१५

*ब्रह्मसूत्रभाष्यम्* — शङ्कराचार्यभगवत्पादविरचितम्, मूलमात्र, निर्णयसागर प्रेस, बम्बई, सन् १९४८

*भगवद्गीता* — गीता प्रेस, गोरखपुर संस्करण।

*भागवतमहापुराणम्* — गीता प्रेस, गोरखपुर संस्करण, संवत् २०१०

*भारतीय तन्त्रशास्त्र* — (कार्यशाला विवरण) दुर्लभ बौद्ध-ग्रन्थ शोधयोजना, केन्द्रीय उच्च तिब्बती शिक्षा संस्थान, सारनाथ, वाराणसी, सन् १९९६

*भोगकारिका* — अष्टप्रकरण द्रष्टव्य।

*मतङ्गपारमेश्वरागमः* — पादचतुष्टयात्मक, फ्रेंच शोध संस्थान, पाण्डिचेरी, दो भाग, सन् १९७७, ८२

*मनुस्मृतिः* — भाषानुवाद, निर्णयसागर प्रेस, बम्बई, सन् १९२९

*महाभारतम्* — गीता प्रेस, गोरखपुर संस्करण।

*महिम्नःस्तोत्रम्* — मधुसूदनीव्याख्यासहित, निर्णयसागर प्रेस, बम्बई, सन् १९३०

*मुण्डकोपनिषद्* — उपनिषत्संग्रह, मोतीलाल बनारसीदास, वाराणसी, सन् १९७०

*मृगेन्द्रवृत्तिदीपिका* — विद्यापादयोगपादौ, शिवागमसिद्धान्तपरिपालनसंघ, देवसालपुरी, तमिलनाडु, सन् १९२८

*मृगेन्द्रागमः* — विद्यापादयोगपादौ, कश्मीर संस्कृत ग्रन्थावली, श्रीनगर, सन् १९३०

*मोक्षकारिका* — अष्टप्रकरण द्रष्टव्य।

*याज्ञवल्क्यस्मृतिः* — स्मृतिसन्दर्भ, भा. ३, मनसुखराय मोर, कलकत्ता, सन् १९५२

*योगिनीहृदयम्* — अमृतानन्दकृतदीपिकासहितम्, मोतीलाल बनारसीदास, वाराणसी, सन् १९८८

*रत्नत्रयम्* — अष्टप्रकरण द्रष्टव्य।

*लिङ्गधारणचन्द्रिका* — शैवभारती भवन, जंगमवाड़ी मठ, वाराणसी, सन् १९८८

*लुप्तागमसंग्रहः* — सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी, द्वितीय भाग, सन् १९८३

*वसन्ततिलका* — कृष्णाचार्यकृता सव्याख्या, (बौद्ध तन्त्र), केन्द्रीय उच्च तिब्बती शिक्षा संस्थान, सारनाथ, वाराणसी, सन् १९९०

*वामनपुराणम्* — नाग पब्लिकेशंस, दिल्ली, सन् १९८३

*वायवीयसंहिता* — शिवपुराणस्था, पण्डित पुस्तकालय, काशी, संवत् २०२०

*विज्ञानभैरवः* — भाषानुवादसहितः, सम्पा. प. व्रजवल्लभ द्विवेदी, प्रका. मोतीलाल बनारसीदास, वाराणसी, सन् १९८४

*शतरत्नसंग्रहः* — उमापतिशिवाचार्यप्रणीतः, आगमानुसन्धान समिति, कलकत्ता, सन् १९४४

*शिवपुराणम्* — पण्डित पुस्तकालय, काशी, संवत् २०२०

*शुक्लयजुर्वेद-माध्यन्दिनसंहिता* — उव्वटमहीधरभाष्यसहिता, मोतीलाल बनारसीदास, वाराणसी, सन् १९८७

*शैवपरिभाषा* — शिवाग्रयोगीन्द्रविरचिता, मैसूर विश्वविद्यालय ग्रन्थमाला, मैसूर, सन् १९५०

*षड्दर्शनसमुच्चयः* — हरिभद्रसूरिविरचितः, गुणरत्नकृतव्याख्यासहितः, भारतीय ज्ञानपीठ प्रकाशन, वाराणसी, सन् १९७०

*सर्वदर्शनसंग्रहः* — सायणमाधवविरचितः, आनन्दाश्रम मुद्रणालय, पूना, सन् १९२८

*सांख्यकारिका* — सांख्यतत्त्वकौमुदीसहिता, चौखम्बा संस्कृत सिरीज, वाराणसी, सन् १९३२

*सांख्यदर्शनम्* — व्याख्याचतुष्टयोपेतम्, मोतीलाल बनारसीदास, वाराणसी, सन् १९८९

*सात्वतसंहिता* — अलशिङ्गभट्टप्रणीतभाष्यसहिता, पांचरात्र आगम, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी, सन् १९८२

*सिद्धान्तशिखामणिः* — सव्याख्या, शैवभारती भवन, जंगमवाड़ी मठ, वाराणसी, सन् १९९३

*सिद्धान्तसारावलिः* — त्रिलोचनशिवाचार्यकृता, कन्नड़भाषानुवादसहिता, मैसूर, सन् १९३०

*सिद्धान्तसारावलिः* — अनन्तशम्भुरचितव्याख्यासहिता, गवर्नमेन्ट ओरियण्टल मैन्युस्क्रिप्ट लाइब्रेरी बुलेटिन, मद्रास, भा. १७-२०

*सोमशम्भुपद्धतिः* — कर्मकाण्डक्रमावली द्रष्टव्य।

*स्वच्छन्दतन्त्रम्* — क्षेमराजकृतव्याख्यासहितम्, दो भाग, परिमल पब्लिकेशंस, दिल्ली, सन् १९८५

*हस्तलिखित ग्रन्थ-सूची* — फ्रेंच शोध संस्थान, पाण्डिचेरी, तीन भाग, सन् १९८६, ८७, ९०

*हिस्ट्री आफ शैव कल्ट्स इन नार्दर्न इण्डिया* — अविनाश प्रकाशन, इलाहाबाद, सन् १९८०

*हेवज्रतन्त्रम्* — योगरत्नमालाव्याख्यासहितम्, (बौद्ध तन्त्र), सम्पा. डॉ. डी. एल. स्नैलग्रोव, २ भाग, आक्सफोर्ड युनिवर्सिटी, पुनर्मुद्रित, सन् १९८०

